ज्येष्ठम् ॥ तस्मात्सर्वौषधमुच्यते ॥ अन्नाद्भूतानि जायन्मयात
जातान्यन्नेन वर्धन्ते ॥ अद्यतेऽत्ति च भूतानि तस्मा वा ए
तदुच्यत इति ॥ तस्माद्वा एतस्मादन्नरसमयात् ॥ अन्यवयं
न्तर आत्मा प्राणमयः ॥ तेनैष पूर्णः ॥ स वा एष पुः ॥
विध एव ॥ तस्य पुरुषविधताम् ॥ अन्वयं पुरुषविधतेष्टा
तस्य प्राण एव शिरः ॥ व्यानो दक्षिणः पक्षः ॥ अकः ॥
उत्तरः पक्षः ॥ आकाश आत्मा ॥ पृथिवी पुच्छं प्रति विज्ञ
तदप्येष श्लोको भवति ॥ इति द्वितीयोऽनुवाकः ॥ प्राः स

प्राणं देवा अनु प्राणन्ति ॥ मनुष्याः पशवश्च येसाचे
प्राणो हि भूतानामायुः ॥ तस्मात्सर्वायुषमुच्यते ॥ कामान
मेव त आयुर्यन्ति ॥ ये प्राणं ब्रह्मोपासते ॥ प्राणो : पूर्व
भूतानामायुः ॥ तस्मात्सर्वायुषमुच्यत इति ॥ तात्मान
एव शारीर आत्मा ॥ यः पूर्वस्य ॥ तस्माद्वा एतस्माव ॥
णमयात् ॥ अन्योऽन्तर आत्मा मनोमयः ॥ तेनैषमेव
पूर्णः ॥ स वा एष पुरुषविध एव ॥ तस्य पुरुषक्षिः ॥
ताम् ॥ अन्वयं पुरुषविधः ॥ तस्य यजुरेव शिरः ॥ क्रोको
दक्षिणः पक्षः ॥ सामोत्तरः पक्षः ॥ आदेश आत्मा अस
अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा ॥ तदप्येष श्लोको भवतिह्मेति
इति तृतीयोऽनुवाकः ॥ ३ ॥ ारीर

यतो वाचो निवर्तन्ते ॥ अप्राप्य मनसा सहविद्वान
आनन्दं ब्रह्मणो विद्वान् ॥ न बिभेति कदाचनेति ॥ तमुं ले
एव शारीर आत्मा ॥ यः पूर्वस्य ॥ तस्माद्वा एतसहु स्य

जायमयात् ॥ अन्योऽन्तर आत्मा विज्ञानमयः॥तेनैष पूर्णः॥
तस्मावा एष पुरुषविध एव ॥ तस्य पुरुषविधताम् ॥
। अन्वयं पुरुषविधः ॥ तस्य श्रद्धेव शिरः ॥ ऋतं दक्षिणः
एष पुरः ॥ सत्यमुत्तरः पक्षः ॥ योग आत्मा ॥ महः पुच्छं
पविधतेष्ठा ॥ तदप्येष श्लोको भवति ॥ इति चतुर्थोऽनु-
॥ अकः ॥ ४ ॥
प्रति विज्ञानं यज्ञं तनुते ॥ कर्माणि तनुतेऽपि च ॥ विज्ञानं
ः ॥ पाः सर्वे ॥ ब्रह्म ज्येष्ठमुपासते ॥ विज्ञानं ब्रह्म चेद्वेद ॥
श्च येस्माच्चेन्न प्रमाद्यति ॥ शरीरे पाप्मनो हित्वा ॥ सर्वा-
ति ॥ कामान्समश्नुत इति ॥ तस्यैष एव शारीर आत्मा ॥
पाणो : पूर्वस्य ॥ तस्माद्वा एतस्माद्विज्ञानमयात् ॥ अन्योऽन्तर
॥ तात्मानन्दमयः ॥ तेनैष पूर्णः ॥ स वा एष पुरुषविध
तस्माव ॥ तस्य पुरुषविधताम् ॥ अन्वयं पुरुषविधः ॥ तस्य
॥ तेंग्रमेव शिरः ॥ मोदो दक्षिणः पक्षः ॥ प्रमोद उत्तरः
पुरुषक्षिः ॥ आनन्द आत्मा ॥ ब्रह्म पुच्छं प्रतिष्ठा ॥ तदप्येष
ः ॥ श्लोको भवति ॥ इति पञ्चमोऽनुवाकः ॥ ५ ॥
आत्मा असन्नेव स भवति ॥ असद्ब्रह्मेति वेद चेत् ॥ अस्ति
भवाह्मेति चेद्वेद ॥ सन्तमेनं ततो विदुरिति ॥ तस्यैष एव
शारीर आत्मा ॥ यः पूर्वस्य ॥ अथातोऽनुप्रश्नाः ॥ उता-
सहविद्वानमुं लोकं प्रेत्य ॥ कश्च न गच्छति ३॥ आहो विद्वा-
॥ तमुं लोकं प्रेत्य ॥ कश्चित्समश्नुता २ उ ॥ सोऽकामयत ॥
तस्यहु स्यां प्रजायेयेति ॥ स तपोऽतप्यत ॥ स तपस्तप्त्वा ॥

इदꣳ सर्वमसृजत ॥ यदिदं किंच ॥ तत्सृष्ट्वा ॥ तदे
नुप्राविशत् ॥ तदनुप्रविश्य ॥ सच्च त्यच्चाभवत् ॥
रुक्तं चानिरुक्तं च ॥ निलयनं चानिलयनं च ॥ विज्ञ
चाविज्ञानं च ॥ सत्यं चानृतं च ॥ सत्यमभवत् ॥ य
किंच ॥ तत्सत्यमित्याचक्षते ॥ तदप्येष श्लोको भवति
इति षष्ठोऽनुवाकः ॥ ६ ॥

असद्वा इदमग्र आसीत् ॥ ततो वै सदजायत
तदात्मानꣳ स्वयमकुरुत ॥ तस्मात्तत्सुकृतमुच्यत इति
यद्वै तत्सुकृतम् ॥ रसो वै सः ॥ रसꣳ ह्येवायं लब्ध्
नन्दी भवति ॥ को ह्येवान्यात्कः प्राण्यात् ॥ यदेष आ
काश आनन्दो न स्यात् ॥ एष ह्येवानन्दयाति ॥ यदा
ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रति
ष्ठां विन्दते ॥ अथ सोऽभयं गतो भवति ॥ यदा ह्येवै
एतस्मिन्नुदरमन्तरं कुरुते ॥ अथ तस्य भयं भवति
तत्त्वेव भयं विदुषोऽमन्वानस्य ॥ तदप्येष श्लोको भवति
इति सप्तमोऽनुवाकः ॥ ७ ॥

भीषाऽस्माद्वातः पवते ॥ भीषोदेति सूर्यः ॥ भीष
ऽस्मादग्निश्चेन्द्रश्च ॥ मृत्युर्धावति पञ्चम इति ॥ सैषाऽऽन
न्दस्य मीमाꣳसा भवति ॥ युवा स्यात्साधुयुवाऽध्यायकः
आशिष्ठो द्रढिष्ठो बलिष्ठः ॥ तस्येयं पृथिवी सर्वा वित्त
पूर्णा स्यात् ॥ स एको मानुष आनन्दः ॥ ते ये श
मानुषा आनन्दाः ॥ स एको मनुष्यगन्धर्वाणामानन्दः

श्रोत्रियस्य चाकामहतस्य ॥ ते ये शतं मनुष्यगन्धर्वाणामानन्दाः ॥ स एको देवगन्धर्वाणामानन्दः ॥ श्रोत्रियस्य चाकामहतस्य ॥ ते ये शतं देवगन्धर्वाणामानन्दाः ॥ स एकः पितृणां चिरलोकलोकानामानन्दः ॥ श्रोत्रियस्य चाकामहतस्य ॥ ते ये शतं पितृणां चिरलोकलोकानामानन्दाः ॥ स एक आजानजानां देवानामानन्दः ॥ श्रोत्रियस्य चाकामहतस्य ॥ ते ये शतमाजानजानां देवानामानन्दाः ॥ स एकः कर्मदेवानां देवानामानन्दः ॥ ये कर्मणा देवानपियन्ति ॥ श्रोत्रियस्य चाकामहतस्य ॥ ते ये शतं कर्मदेवानां देवानामानन्दाः ॥ स एको देवानामानन्दः ॥ श्रोत्रियस्य चाकामहतस्य ॥ ते ये शतं देवानामानन्दाः ॥ स एक इन्द्रस्यानन्दः ॥ श्रोत्रियस्य चाकामहतस्य ॥ ते ये शतमिन्द्रस्यानन्दाः ॥ स एको बृहस्पतेरानन्दः ॥ श्रोत्रियस्य चाकामहतस्य ॥ ते ये शतं बृहस्पतेरानन्दाः ॥ स एकः प्रजापतेरानन्दः ॥ श्रोत्रियस्य चाकामहतस्य ॥ ते ये शतं प्रजापतेरानन्दाः ॥ स एको ब्रह्मण आनन्दः ॥ श्रोत्रियस्य चाकामहतस्य ॥ स यश्चायं पुरुषे ॥ यश्चासावादित्ये ॥ स एकः ॥ स य एवंवित् ॥ अस्माल्लोकात्प्रेत्य ॥ एतमन्नमयमात्मानमुपसंक्रामति ॥ एतं प्राणमयमात्मानमुपसंक्रामति ॥ एतं मनोमयमात्मानमुपसंक्रामति ॥ एतं विज्ञानमयमात्मानमुपसंक्रामति ॥

एतमानन्दमयमात्मानमुपसंक्रामति ॥ तदप्येष श्लो
भवति ॥ इत्यष्टमोऽनुवाकः ॥ ८ ॥

यतो वाचो निवर्तन्ते ॥ अप्राप्य मनसा सह ॥ आनं
ब्रह्मणो विद्वान् ॥ न बिभेति कुतश्चनेति ॥ एतꣳ
वाव न तपति किमहꣳ साधु नाकरवम् ॥ कि
पापमकरवमिति ॥ स य एवं विद्वानेते आत्मा
स्पृणुते ॥ उभे ह्येवैष एते आत्मानꣳ स्पृणुते य
वेद ॥ इत्युपनिषत् ॥ इति नवमोऽनुवाकः ॥ ९ ॥

ब्रह्मविदिदमयमिदमेकविꣳशतिरन्नादन्नरसमयात्प्रा
णो व्यानोऽपान आकाशः पृथिवी पुच्छꣳ पञ्चविꣳश
प्राणं यजुर्ऋक् सामादेशोऽथर्वाङ्गिरसः पुच्छं द्वाविꣳश
यंतः श्रद्धर्तꣳसत्ययोगो महोष्टाऽदश विज्ञानं प्रियं मो
प्रमोद आनन्दो ब्रह्मपुच्छं द्वाविꣳशतिरसन्नेवाथाष्टा
शतिरसत्षोडश भीषाऽस्मान्मानुषो मनुष्यगन्धर्व
देवगन्धर्वाणां पितृणां चिरलोकलोकानामाजानजा
कर्मदेवानां ये कर्मणा देवानामिन्द्रस्य बृहस्पतेः प्रजा
तेर्ब्रह्मणः स यश्च संक्रामत्येकपञ्चाशद्यतः कुतश्च नै
कादश नव ॥ ब्रह्मविद्य एवं वेदेत्युपनिषत् ॥

सह नाववतु ॥ सह नौ भुनक्तु ॥ सह वीर्यं क
वहै ॥ तेजस्विनावधीतमस्तु मा विद्विषावहै ॥ ॐशा
शान्तिः शान्तिः ॥

इति द्वितीया ब्रह्मानन्दवल्ली ॥ २ ॥

# अथ भृगुवल्ली ॥ ३ ॥

हरिः ॐ ॥ सह नाववतु ॥ सह नौ भुनक्तु ॥ सह वीर्यं करवावहै ॥ तेजस्विनावधीतमस्तु मा विद्विषावहै ॐ शान्तिः शान्तिः शान्तिः ॥

भृगुर्वै वारुणिः ॥ वरुणं पितरमुपससार ॥ अधीहि भगवो ब्रह्मेति ॥ तस्मा एतत्प्रोवाच ॥ अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति ॥ तꣳ होवाच ॥ यतो वा इमानि भूतानि जायन्ते ॥ येन जातानि जीवन्ति ॥ यत्प्रयन्त्य-भिसंविशन्ति ॥ तद्विजिज्ञासस्व ॥ तद्ब्रह्मेति ॥ स तपो-ऽतप्यत ॥ स तपस्तप्त्वा ॥ इति प्रथमोऽनुवाकः ॥ १ ॥

अन्नं ब्रह्मेति व्यजानात् ॥ अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते ॥ अन्नेन जातानि जीवन्ति ॥ अन्नं प्रयन्त्यभिसंविशन्तीति ॥ तद्विज्ञाय ॥ पुनरेव वरुणं पितरमुपससार ॥ अधीहि भगवो ब्रह्मेति ॥ तꣳहोवाच ॥ तपसा ब्रह्म विजिज्ञासस्व ॥ तपो ब्रह्मेति ॥ स तपोऽत-प्यत ॥ स तपस्तप्त्वा ॥ इति द्वितीयोऽनुवाकः ॥ २ ॥

प्राणो ब्रह्मेति व्यजानात् ॥ प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते ॥ प्राणेन जातानि जीवन्ति ॥ प्राणं प्रयन्त्यभिसंविशन्तीति ॥ तद्विज्ञाय ॥ पुनरेव वरुणं पितरमुपससार ॥ अधीहि भगवो ब्रह्मेति ॥ तꣳहोवाच ॥ तपसा ब्रह्म विजिज्ञासस्व ॥ तपो ब्रह्मेति ॥ स तपोऽत-प्यत ॥ स तपस्तप्त्वा ॥ इति तृतीयोऽनुवाकः ॥ ३ ॥

मनो ब्रह्मेति व्यजानात् ॥ मनसो ह्येव खल्विम
भूतानि जायन्ते ॥ मनसा जातानि जीवन्ति ॥
प्रयन्त्यभिसंविशन्तीति ॥ तद्विज्ञाय ॥ पुनरेव
पितरमुपससार ॥ अधीहि भगवो ब्रह्मेति ॥ तꣳहोवा
तपसा ब्रह्म विजिज्ञासस्व ॥ तपो ब्रह्मेति ॥ स तपो
प्यत ॥ स तपस्तप्त्वा ॥ इति चतुर्थोऽनुवाकः ॥ ४

विज्ञानं ब्रह्मेति व्यजानात् ॥ विज्ञानाद्ध्येव खल्वि
मानि भूतानि जायन्ते ॥ विज्ञानेन जातानि जीवन्ति
विज्ञानं प्रयन्त्यभिसंविशन्तीति ॥ तद्विज्ञाय ॥ पुनरेव
वरुणं पितरमुपससार ॥ अधीहि भगवो ब्रह्मेति ॥ त
होवाच ॥ तपसा ब्रह्म विजिज्ञासस्व ॥ तपो ब्रह्मेति
स तपोऽतप्यत ॥ स तपस्तप्त्वा ॥ इति पञ्चमो
वाकः ॥ ५ ॥

आनन्दो ब्रह्मेति व्यजानात् ॥ आनन्दाद्ध्येव खल्वि
मानि भूतानि जायन्ते ॥ आनन्देन जातानि जीवन्ति
आनन्दं प्रयन्त्यभिसंविशन्तीति ॥ सैषा भार्गवी वा
विद्या ॥ परमे व्योमन् प्रतिष्ठिता ॥ य एवं वेद प्रति
ष्ठति ॥ अन्नवानन्नादो भवति ॥ महान् भवति प्रज
पशुभिर्ब्रह्मवर्चसेन ॥ महान् कीर्त्या ॥ इति षष्ठो
वाकः ॥ ६ ॥

अन्नं न निन्द्यात् ॥ तद्व्रतम् ॥ प्राणो वा अन्नम्
शरीरमन्नादम् ॥ प्राणे शरीरं प्रतिष्ठितम् ॥ शरीरे प्रा

त्विषि प्रतिष्ठितः ॥ तदेतदन्नमन्ने प्रतिष्ठितम् ॥ स य एतदन्न-
त ॥ न्ने प्रतिष्ठितं वेद प्रतितिष्ठति ॥ अन्नवानन्नादो भवति ॥
रेव महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन ॥ महान्
होवा र्त्या ॥ इति सप्तमोऽनुवाकः ॥ ७ ॥
तपो अन्नं न परिचक्षीत ॥ तद्व्रतम् ॥ आपो वा अन्नम् ॥
॥ ४ ज्योतिरन्नादम् ॥ अप्सु ज्योतिः प्रतिष्ठितम् ॥ ज्योति-
व खल्वापः प्रतिष्ठिताः ॥ तदेतदन्नमन्ने प्रतिष्ठितम् ॥ स य
तीवन्त्तिदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति ॥ अन्नवानन्नादो
॥ पुनवति ॥ महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन ॥ म-
त ॥ तान्कीर्त्या ॥ इत्यष्टमोऽनुवाकः ॥ ८ ॥
ब्रह्मेति अन्नं बहु कुर्वीत ॥ तद्व्रतम् ॥ पृथिवी वा अन्नम् ॥
अन्नमो ाकाशोऽन्नादः ॥ पृथिव्यामाकाशः प्रतिष्ठितः ॥ आकाशे
थिवी प्रतिष्ठिता ॥ तदेतदन्नमन्ने प्रतिष्ठितम् ॥ स य
व खल्विदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति ॥ अन्नवानन्नादो
तीवन्भवति ॥ महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन ॥ म-
वी वा ान्कीर्त्या ॥ इति नवमोऽनुवाकः ॥ ९ ॥
द प्रति न कंचन वसतौ प्रत्याचक्षीत ॥ तद्व्रतम् ॥ तस्मा-
ति प्रजया कया च विधया बह्वन्नं प्राप्नुयात् ॥ अराध्यस्मा
पष्टोऽन्नमित्याचक्षते ॥ एतद्वै मुखतोऽन्नꣳ राद्धम् ॥ मुख-
तोऽस्मा अन्नꣳ राध्यते ॥ एतद्वै मध्यतोऽन्नꣳ राद्धम् ॥
अन्नम् मध्यतोऽस्मा अन्नꣳ राध्यते ॥ एतद्वा अन्ततोऽन्नꣳ
रे प्राराद्धम् ॥ अन्ततोऽस्मा अन्नꣳ राध्यते ॥ १ ॥ य एवं

वेद ॥ क्षेम इति वाचि ॥ योगक्षेम इति प्राणापानयोः
कर्मेति हस्तयोः ॥ गतिरिति पादयोः ॥ विमुक्तिरि
पायौ ॥ इति मानुषीः समाज्ञाः ॥ अथ दैवीः ॥ तृप्तिरि
वृष्टौ ॥ बलमिति विद्युति ॥ २ ॥ यश इति पशुषु ॥
ज्योतिरिति नक्षत्रेषु ॥ प्रजातिरमृतमानन्द इत्युपस्थे ॥
सर्वमित्याकाशे ॥ तत्प्रतिष्ठेत्युपासीत ॥ प्रतिष्ठावा
भवति ॥ तन्मह इत्युपासीत ॥ महान् भवति ॥ तन्मन
इत्युपासीत ॥ मानवान् भवति ॥ ३ ॥ तन्नम इत्यु
सीत ॥ नम्यन्तेऽस्मै कामाः ॥ तद्ब्रह्मेत्युपासीत ॥ ब्र
वान् भवति ॥ तद्ब्रह्मणः परिमर इत्युपासीत ॥ पर्ये
म्रियन्ते द्विषन्तः सपत्नाः ॥ परि येऽप्रिया भ्रातृव्याः
स यश्चायं पुरुषे ॥ यश्चासावादित्ये ॥ स एकः ॥ ४
स य एवंवित् ॥ अस्माल्लोकात्प्रेत्य ॥ एतमन्नमयमात्मा
सुपसंक्रम्य ॥ एतं प्राणमयमात्मानमुपसंक्रम्य ॥ ए
मनोमयमात्मानमुपसंक्रम्य ॥ एतं विज्ञानमयमात्मा
सुपसंक्रम्य ॥ एतमानन्दमयमात्मानमुपसंक्रम्य ॥ इम
ल्लोकान्कामान्नीकामरूप्यनुसंचरन् ॥ एतत्साम गायन्ना
॥ हा ३ वु हा ३ वु हा ३ वु ॥ ५ ॥ अहमन्नमहमन्न
हमन्नम् ॥ अहमन्नादो ३ ऽहमन्नादो ३ ऽहमन्नादः
अहꣳ श्लोककृदहꣳश्लोककृदहꣳश्लोककृत् ॥ अहमस्मि
प्रथमजा ऋता ३ स्य ॥ पूर्वं देवेभ्योऽमृतस्य ना
भायि ॥ यो मा ददाति स इदेव मा ३ वाः ॥ अह

मन्नमदन्तमा ३ द्मि ॥ अहं विश्वं भुवनमभ्यभवां ३ ॥ सुवर्णज्योतीः ॥ य एवं वेद ॥ इत्युपनिषत् ॥ ६ ॥ राध्यते विद्युति मानवान्भवत्येको हा ३ वु य एवं वेकं च ) ॥ इति दशमोऽनुवाकः ॥ १० ॥

भृगुस्तस्मै यतो विशन्ति तद्विजिज्ञासस्व तद्ब्रयोदन्नं प्राणं मनो विज्ञानमिति विज्ञाय तं तपसा द्वादश द्वादशानन्द इति सैषा दशान्नं न निन्द्यात् प्राणः शरीरमन्नं न परिचक्षीतापो ज्योतिरन्नं बहु कुर्वीत पृथिव्याकाश एकादशैकादश ॥ न कंचनैकषष्टिरेकान्नविंशतिरेकान्नविंशतिः ॥ सह नाववतु ॥ सह नौ भुनक्तु ॥ सह वीर्यं करवावहै ॥ तेजस्विनावधीतमस्तु मा विद्विषावहै ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

॥ भृगुरित्युपनिषत् ॥

॥ इति तृतीया भृगुवल्ली ॥ ३ ॥

शं नो मित्रः शं वरुणः ॥ शं नो भवत्वर्यमा ॥ शं न इन्द्रो बृहस्पतिः ॥ शं नो विष्णुरुरुक्रमः ॥ नमो ब्रह्मणे॥ नमस्ते वायो ॥ त्वमेव प्रत्यक्षं ब्रह्मासि ॥ त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि ॥ ऋतं वदिष्यामि ॥ सत्यं वदिष्यामि ॥ तन्मामवतु ॥ तद्वक्तारमवतु ॥ अवतु माम् ॥ अवतु वक्तारम् ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

॥ इति तैत्तिरीयोपनिषत्संपूर्णा ॥ ७ ॥

॥ ओ३म् तत्सत् ॥

# ऐतरेयोपनिषत् ॥ ८ ॥

वाङ् मे मनसि प्रतिष्ठिता मनो मे वाचि प्रति
माविरावीर्म एधि ॥ वेदस्य म आणीस्थः श्रुतं मे मा
सीरनेनाधीतेनाहोरात्रान्संदधाम्यृतं वदिष्यामि ॥
वदिष्यामि ॥ तन्मामवतु तद्वक्तारमवतु अवतु मा
वक्तारमवतु वक्तारम् ॥ ओ३म् शान्तिः शान्तिः शान्तिः

आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मि
स ईक्षत लोकान्नु सृजा इति ॥ १ ॥ स इमांल्लोका
जत अम्भो मरीचीर्मरमापोऽदोऽम्भः परेण दिवं द्यौः
तिष्ठाऽन्तरिक्षं मरीचयः ॥ पृथिवी मरो या अधस्ता
आपः ॥ २ ॥ स ईक्षतेमे नु लोका लोकपालान्नु
इति ॥ सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्च्छयत् ॥ ३
तमभ्यतपत्तस्याभितप्तस्य मुखं निरभिद्यत यथाण्डं मु
द्वाग्वाचोऽग्निर्नासिके निरभिद्येतां नासिकाभ्यां प्राण
प्राणाद्वायुरक्षिणी निरभिद्येतामक्षीभ्यां चक्षुश्चक्षुष
दित्यः कर्णौ निरभिद्येतां कर्णाभ्यां श्रोत्रं श्रोत्राद्दिशः
ङ्निरभिद्यत त्वचो लोमानि लोमभ्य ओषधिवनस्पत
हृदयं निरभिद्यत हृदयान्मनो मनसश्चन्द्रमा नाभिर्नि
भिद्यत नाभ्या अपानोऽपानान्मृत्युः शिश्नं निरभि
शिश्नाद्रेतो रेतस आपः ॥ ४ ॥ इति प्रथमः खण्डः ॥

एता देवताः सृष्टा अस्मिन् महत्यर्णवे प्रापतंस्तम-
ापिपासाभ्यामन्ववार्जत् ॥ ता एनमब्रुवन्नायतनं नः
ानीहि यस्मिन् प्रतिष्ठिता अन्नमदामेति ॥ १ ॥ ताभ्यो
मानयत्ता अब्रुवन्न वै नोऽयमलमिति ॥ ताभ्योऽश्व-
नयत्ता अब्रुवन्न वै नोऽयमलमिति ॥ २ ॥ ताभ्यः
षमानयत्ता अब्रुवन् सुकृतं बतेति पुरुषो वाव सुकृ-
॥ ता अब्रवीद्यथाऽऽयतनं प्रविशतेति ॥ ३ ॥ अग्नि-
भूत्वा मुखं प्राविशद्वायुः प्राणो भूत्वा नासिके प्रावि-
दादित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशद्दिशः श्रोत्रं भूत्वा
र्णौ प्राविशन्नोषधिवनस्पतयो लोमानि भूत्वा त्वचं
विशंश्चन्द्रमा मनो भूत्वा हृदयं प्राविशन्मृत्युरपानो
त्वा नाभिं प्राविशदापो रेतो भूत्वा शिश्नं प्राविशन्
४ ॥ तमशनापिपासे अब्रूतामावाभ्यामभिप्रजानी-
ति ॥ स ते अब्रवीदेतास्वेव वां देवतास्वाभजाम्येतासु
गिन्यौ करोमीति ॥ तस्माद्यस्यै कस्यै च देवतायै हवि-
ह्यते भागिन्यावेवास्यामशनापिपासे भवतः ॥ ५ ॥
ति द्वितीयः खण्डः ॥ २ ॥

स ईक्षतेमे नु लोकाश्च लोकपालाश्चान्नमेभ्यः सृजा
ति ॥१॥ सोऽपोऽभ्यतपत् ताभ्योऽभितप्ताभ्यो मूर्तिरजा-
त ॥ या वै सा मूर्तिरजायताऽन्नं वै तत् ॥२॥ तदेतत्सृष्टं
त् पराङत्यजिघांसत् तद्वाचा जिघृक्षत्तन्नाश-
द्वाचा ग्रहीतुम् ॥ स यद्धैनद्वाचाऽग्रहैष्यदभिव्याहृत्य

हैवान्नमत्रप्स्यत् ॥३॥ तत्प्राणेनाजिघृक्षत् तन्नाशक्नो
णेन ग्रहीतुम् ॥ स यद्धैनत्प्राणेनाग्रहैष्यदभिप्राण्य
न्नमत्रप्स्यत् ॥ ४ ॥ तच्चक्षुषाऽजिघृक्षत् तन्नाशक्नोच्
ग्रहीतुम् ॥ स यद्धैनच्चक्षुषाऽग्रहैष्यद्दृष्ट्वा हैवान्नमत्र
॥ ५ ॥ तच्छ्रोत्रेणाजिघृक्षत् तन्नाशक्नोच्छ्रोत्रेण
तुम् ॥ स यद्धैनच्छ्रोत्रेणाग्रहैष्यच्छ्रुत्वा हैवान्नमत्र
॥ ६ ॥ तत्त्वचाऽजिघृक्षत् तन्नाशक्नोत्त्वचा ग्रहीतु
स यद्धैनत्त्वचाऽग्रहैष्यत्स्पृष्ट्वा हैवान्नमत्रप्स्यत् ॥
तन्मनसाऽजिघृक्षत् तन्नाशक्नोन्मनसा ग्रहीतुम् ॥ स
नन्मनसाऽग्रहैष्यद्ध्यात्वा हैवान्नमत्रप्स्यत् ॥ ८ ॥ त
नाजिघृक्षत्तन्नाशक्नोच्छिश्नेन ग्रहीतुम् ॥ स यद्धैनच्छि
ग्रहैष्यद्विसृज्य हैवान्नमत्रप्स्यत् ॥९॥ तदपानेनाजि
तदावयत्॥ सैषोऽन्नस्य ग्रहो यद्वायुरन्नमायुर्वा एष य
॥ १० ॥ स ईक्षत कथं न्विदं मदृते स्यादिति स ई
कतरेण प्रपद्या इति ॥ स ईक्षत यदि वाचाऽभिव्या
यदि प्राणेनाभिप्राणितं यदि चक्षुषा दृष्टं यदि श्रो
श्रुतं यदि त्वचा स्पृष्टं यदि मनसा ध्यातं यद्यपा
भ्यपानितं यदि शिश्नेन विसृष्टमथ कोऽहमिति ॥
स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत ॥
विदृतिर्नाम द्वास्तदेतन्नान्दनं तस्य त्रय आवसथा
स्वप्ना अयमावसथोऽयमावसथोऽयमावसथ इति ॥
स जातो भूतान्यभिव्यैख्यत् किमिहान्यं वावदिषदि

एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमितीः ॥१३॥
स्मादिदन्द्रो नामेदन्द्रो हवै नाम तमिदन्द्रं सन्तमिन्द्र
त्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः परोक्षप्रिया
व हि देवाः ॥ १४ ॥ इति तृतीयः खण्डः ॥ ३ ॥

॥ इत्यैतरेये द्वितीयारण्यके चतुर्थोऽध्यायः ॥ ४ ॥

उपनिषत्सु प्रथमोऽध्यायः ॥ १ ॥

पुरुषे ह वा अयमादितो गर्भो भवति । यदे-
देतस्तदेतत्सर्वेभ्योऽङ्गेभ्यस्तेजःसंभूतमात्मन्येवात्मानं
भर्ति तद्यदा स्त्रियां सिञ्चत्यथैनज्जनयति तदस्य प्रथमं
न्म ॥ १ ॥ तत्स्त्रिया आत्मभूयं गच्छति यथा स्वमङ्गं
था तस्मादेनां न हिनस्ति साऽस्यै तमात्मानमत्र गतं
वयति ॥ २ ॥ सा भावयित्री भावयितव्या भवति
स्त्री गर्भं बिभर्ति सोऽग्र एव कुमारं जन्मनोऽग्रेऽधि-
वयति स यत्कुमारं जन्मनोऽग्रेऽधिभावयत्यात्मानमेव
द्भावयत्येषां लोकानां सन्तत्या एवं सन्तता हीमे लोका-
स्तदस्य द्वितीयं जन्म ॥ ३ ॥ सोऽस्याऽयमात्मा पुण्येभ्यः
र्मभ्यः प्रतिधीयतेऽथास्याऽयमितर आत्मा कृतकृत्यो
योगतः प्रैति स इतः प्रयन्नेव पुनर्जायते तदस्य तृतीयं
न्म ॥ ४ ॥ तदुक्तमृषिणा । गर्भेनु सन्नन्वेषामवेदमहं
वानां जनिमानि विश्वा ॥ शतं मा पुर आयसीररक्ष-
धः श्येनो जवसा निरदीयमिति गर्भ एवैतच्छयानो
ामदेव एवमुवाच ॥ ५ ॥ स एवं विद्वानस्माच्छरी-

रभेदादूर्ध्व उत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् का
नाप्त्वामृतः समभवत् समभवत् ॥ ६ ॥ इति च
खण्डः ॥ ४ ॥ इत्यैतरेयारण्यके पञ्चमोऽध्यायः ॥
उपनिषत्सु द्वितीयोऽध्यायः ॥ २ ॥

कोऽयमात्मेति वयमुपास्महे कतरः स आत्मा
वा पश्यति येन वा शृणोति येन वा गन्धा
जिघ्रति येन वा वाचं व्याकरोति येन वा स्
चास्वादु च विजानाति ॥ १ ॥ यदेतत् हृदयं मनश्चै
संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्म
जूतिः स्मृतिः संकल्पः क्रतुरसुः कामो वश इति ॥ स
ण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति ॥ २ ॥
ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च
महाभूतानि पृथिवी वायुराकाश आपो ज्योतींषीत्ये
नीमानि च क्षुद्रमिश्राणीव ॥ बीजानीतराणि चेत
चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिज्
चाश्वा गावः पुरुषा हस्तिनो यत्किंचेदं प्राणि जङ्गमं
पतत्रि च यच्च स्थावरं सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रति
प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म ॥ ३ ॥
एतेन प्राज्ञेनात्मनास्माल्लोकादुत्क्रम्यामुष्मिन् स्वर्गे
सर्वान्कामानाप्त्वाऽमृतः समभवत्समभवत् ॥ इ
॥ ४ ॥ इति पञ्चमः खण्डः ॥ ५ ॥ इत्यैतरेयार
षष्ठोऽध्यायः ॥ ६ ॥ उपनिषत्सु तृतीयोऽध्यायः ॥

वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमा-
विरावीर्म एधि ॥ वेदस्य म आणीस्थः श्रुतं मे मा प्रहा-
सीः ॥ अनेनाधीतेनाहोरात्रान्संदधाम्यृतं वदिष्यामि सत्यं
वदिष्यामि तन्मामवतु तद्वक्तारमवत्ववतु मामवतु
वक्तारमवतु वक्तारम् ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

इत्यैतरेयोपनिषत्संपूर्णा ॥ ८ ॥

---

ॐतत्सत् ॥

# छान्दोग्योपनिषत् ॥ ९ ॥

ॐ आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च ॥ सर्वाणि सर्वं ब्रह्मोपनिषदं माहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मेऽस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

ओमित्येतदक्षरमुद्गीथमुपासीतोमिति ह्युद्गायति तस्योपव्याख्यानम् ॥ १ ॥ एषां भूतानां पृथिवी रसः पृथिव्या आपो रसोऽपामोषधयो रस ओषधीनां पुरुषो रसः पुरुषस्य वाग्रसो वाच ऋग्रस ऋचः साम रसः साम्न उद्गीथो रसः ॥ २ ॥ स एष रसानाꣳ रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः ॥ ३ ॥ कतमा कतमर्क्कतमत्कतमत्साम कतमः कतम उद्गीथ इति विमृष्टं भवति ॥ ४ ॥ वागेवर्क्प्राणः सामोमित्येतदक्षरमुद्गीथस्तद्वा एतन्मिथुनं

यद्वार्क्च प्राणश्चर्क्च साम च ॥ ५ ॥ तदेतन्मिथु-
मित्येतस्मिन्नक्षरे सꣳसृज्यते यदा वै मिथुनौ स-
च्छत आपयतो वै तावन्योन्यस्य कामम् ॥ ६ ॥
यिता ह वै कामानां भवति य एतदेवं विद्वानक्षर-
थमुपास्ते ॥ ७ ॥ तद्वा एतदनुज्ञाक्षरं यद्धि किंचा-
नात्योमित्येव तदाहैषा एव समृद्धिर्यदनुज्ञा समर्धि-
ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गी-
पास्ते ॥ ८ ॥ तेनेयं त्रयी विद्या वर्तते ओमित्याश्रा-
त्योमिति शꣳसत्योमित्युद्गायत्येतस्यैवाक्षरस्यापचित्यै
हिम्ना रसेन ॥९॥ तेनोभौ कुरुतो यश्चैतदेवं वेद य-
वेद। नाना तु विद्या चाविद्या च यदेव विद्यया करोति
द्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति खल्वेतस्यैवा-
स्योपव्याख्यानं भवति ॥१०॥ तृतीयस्य प्रथमः खण्डः॥

देवासुरा ह वै यत्र संयेतिर उभये प्राजापत्या-
देवा उद्गीथमाजहुरनेनैनानभिभविष्याम इति ॥
ते ह नासिक्यं प्राणमुद्गीथमुपासांचक्रिरे तꣳहा-
पाप्मना विविधुस्तस्मात्तेनोभयं जिघ्रति सुरभि च दु-
च पाप्मना ह्येष विद्धः ॥ २ ॥ अथ ह वाचमुद्गीथ-
सांचक्रिरे ताꣳहासुराः पाप्मना विविधुस्तस्मात्तय-
वदति सत्यं चानृतं च पाप्मना ह्येष विद्धा ॥ ३ ॥
ह चक्षुरुद्गीथमुपासांचक्रिरे तद्धासुराः पाप्मना वि-
स्तस्मात्तेनोभयं पश्यति दर्शनीयं चादर्शनीयं च पा-

तद्विद्धम् ॥ ४ ॥ अथ ह श्रोत्रमुद्गीथमुपासांचक्रिरे
द्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयꣳ शृणोति
वणीयं चाश्रवणीयं च पाप्मना ह्येतद्विद्धम् ॥ ५ ॥
थ ह मन उद्गीथमुपासांचक्रिरे तद्धासुराः पाप्मना
विधुस्तस्मात्तेनोभयꣳसंकल्पयते संकल्पनीयं चासंक-
नीयं च पाप्मना ह्येतद्विद्धम् ॥ ६ ॥ अथ ह य एवायं
ख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे तꣳहासुरा ऋत्वा वि-
ध्वसुर्यथाऽश्मानमाखणमृत्वा विध्वꣳसेत् ॥ ७ ॥ एवं
थाऽश्मानमाखणमृत्वा विध्वꣳसत एवꣳहैव स विध्वꣳ-
ते य एवंविदि पापं कामयते यश्चैनमभिदासति स
षोऽश्माखणः ॥ ८ ॥ नैवैतेन सुरभि न दुर्गन्धि विजा-
त्यपहतपाप्मा ह्येष तेन यदश्नाति यत्पिबति तेनेतरान्
णानवत्येतमु एवान्ततोऽवित्त्वोत्क्रामति व्याददात्येवा-
त इति ॥ ९ ॥ तꣳहाङ्गिरा उद्गीथमुपासांचक्र एवा-
रसं मन्यतेऽङ्गानां यद्रसः ॥ १० ॥ तेन तꣳह बृह-
स्पतिरुद्गीथमुपासांचक्र एतमु एव बृहस्पतिं मन्यते
ग्घि बृहती तस्या एष पतिः ॥ ११ ॥ तेन तꣳहा-
स्य उद्गीथमुपासांचक्र एतमु एवायास्यं मन्यन्त आस्या-
दयते ॥ १२ ॥ तेन तꣳह बको दाल्भ्यो विदांचकार ॥
ह नैमिषीयानामुद्गाता बभूव स ह स्मैभ्यः कामाना-
यति ॥ १३ ॥ आगाता ह वै कामानां भवति य

एतदेवं विद्वानक्षरमुद्गीथमुपास्त इत्यध्यात्मम् ॥
तृतीयस्य द्वितीयः खण्डः ॥ २ ॥

अथाधिदैवतं थ एवासौ तपति तमुद्गीथमुपासी
द्यन्वा एष प्रजाभ्य उद्गायति उद्यंस्तमोभयमपहन्त्य
हन्ता ह वै भयस्य तमसो भवति य एवं वेद ॥
समान उ एवायं चासौ चोष्णोऽयमुष्णोऽसौ स्वर
ममाचक्षते स्वर इति प्रत्यास्वर इत्यमुं तस्माद्वा एत
ममुं चोद्गीथमुपासीत ॥ २ ॥ अथ खलु व्यानमेवो
थमुपासीत यद्वै प्राणिति स प्राणो यदपानिति सोऽ
नोऽथ यः प्राणापानयोः सन्धिः स व्यानो यो व्
सा वाक् तस्मादप्राणन्ननपानन्वाचमभिव्याहरति ॥
या वाक्सर्क्तस्मादप्राणन्ननपानन्नृचमभिव्याहरति
त्साम तस्मादप्राणन्ननपानन्साम गायति यत्सा
उद्गीथस्तस्मादप्राणन्ननपानन्नुद्गायति ॥ ४ ॥ अतो य
न्यानि वीर्यवन्ति कर्माणि यथाग्नेर्मन्थनमाजेः
दृढस्य धनुष आयमनमप्राणन्ननपानꣳस्तानि करोत्ये
हेतोर्व्यानमेवोद्गीथमुपासीत ॥ ५ ॥ खलूद्गीथाक्ष
पासीतोद्गीथ इति प्राण एवोत्प्राणेन ह्युत्तिष्ठति वा
र्वाचो ह गिर इत्याचक्षतेऽन्नं थमन्ने हीदꣳ सर्वꣳ
तम् ॥ ६ ॥ द्यौरेवोदन्तरिक्षं गीः पृथिवी थमा
एवोद्वायुर्गीरग्निस्थꣳसामवेद एवोद्यजुर्वेदो गीः
दस्थं दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवान

वति य एतान्येवं विद्वानुद्गीथाक्षराण्युपास्त उद्गीथ इति
७ ॥ अथ खल्वाशीः समृद्धिरुपसरणानीत्युपासीत
न साम्ना स्तोष्यन्स्यात्तत्सामोपधावेत् ॥ ८ ॥ यस्या-
चि तामृचं यदार्षेयं तमृषिं यां देवतामभिष्टोष्यन्स्यात्तां
वतामुपधावेत् ॥ ९ ॥ येन छन्दसा स्तोष्यन्स्यात्त-
छन्द उपधावेद्येन स्तोमेन स्तोष्यमाणः स्यात्तꣳ स्तोम-
उपधावेत् ॥ १० ॥ यां दिशमभिष्टोष्यन्स्यात्तां दिश-
पधावेत् ॥ ११ ॥ आत्मानमन्तत उपसृत्य स्तुवीत
मं ध्यायन्नप्रमत्तोऽभ्याशो ह यदस्मै स कामः समृ-
त यत्कामः स्तुवीतेति यत्कामः स्तुवीतेति ॥ १२ ॥
थमस्य तृतीयः खण्डः ॥ ३ ॥

ओमित्येतदक्षरमुद्गीथमुपासीतोमिति ह्युद्गायति तस्यो-
व्याख्यानम् ॥ १ ॥ देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां
विशꣳस्ते छन्दोभिरच्छादयन्यदेभिरच्छादयꣳस्तच्छ-
सां छन्दस्त्वम् ॥ २ ॥ तानु तत्र मृत्युर्यथा मत्स्यमुदके
रिपश्येदेवं पर्यपश्यदृचि साम्नि यजुषि । ते नु वित्त्वोर्ध्वा
चः साम्नो यजुषः स्वरमेव प्राविशन् ॥ ३ ॥ यदा वा
चमाप्नोत्योमित्येवातिस्वरत्येवꣳसामैवं यजुरेष उ स्वरो
तदक्षरमेतदमृतमभयं तत्प्रविश्य देवा अमृता अ-
या अभवन् ॥ ४ ॥ स य एतदेवं विद्वानक्षरं प्रणौत्येत-
वाक्षरꣳस्वरममृतमभयं प्रविशति तत्प्रविश्य यदमृता
वास्तदमृतो भवति ॥ ५ ॥ चतुर्थः खण्डः ॥ ४ ॥

अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इत्यसौ वा आदित्य उद्गीथ एष प्रणव ओमिति ह्येष स्वरन्नेति ॥ १ ॥ एतमु एवाहमभ्यागासिषं तस्मान्मा त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच रश्मीस्त्वं पर्यावर्तयाद्बहवो वै ते भविष्यन्तीत्यधिदैवतम् ॥ २ ॥ अथाध्यात्मं य एवायं मुख्यः प्राणस्तमुद्गीथमुपासीतोमिति ह्येष स्वरन्नेति ॥ ३ ॥ एतमु एवाहमभ्यगासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच प्राणांस्त्वं भूमानमभिगायताद्बहवो वै मे भविष्यन्तीति ॥ ४ ॥ अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इति होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरतीत्यनुसमाहरतीति ॥ ५ ॥ पञ्चमः खण्डः ॥ ५ ॥

इयमेवर्गग्निः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयत इयमेव साऽग्निरमस्तत्साम ॥१॥ अन्तरिक्षमेवर्ग्वायुः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳसाम गीयतेऽन्तरिक्षमेव सा वायुरमस्तत्साम ॥२॥ द्यौरेवर्गादित्यः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते द्यौरेव सादित्योऽमस्तत्साम ॥३॥ नक्षत्राण्येवर्क् चन्द्रमाः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते नक्षत्राण्येव सा चन्द्रमा अमस्तत्साम ॥४॥ अथ यदेतदादित्यस्य शुक्लं भाः सैवर्गथ यन्नीलं

स उक्थं वर्णं तत्साम तदेतदेतस्यामृच्यध्यूढ१ साम तस्मादृच्य-
ति ध्यूढ१ साम गीयते ॥ ५ ॥ अथ यदेवैतदादित्यस्य शुक्लं
तस्मान्नाः सैव साथ यन्नीलं परः कृष्णं तदमस्तत्सामाथ य
श्मीश्पोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रु-
॥ हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः ॥ ६ ॥ तस्य
पासीत्था कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स
यगापि सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्म-
त्रमुक्यो य एवं वेद ॥ ७ ॥ तस्यर्क् च साम च गेष्णौ
भवितसादुद्गीथस्तस्मात्त्वेवोद्गीतैतस्य हि गाता स एष ये चामु-
यः प्रणमात्प्राञ्चो लोकास्तेषां चेष्टे देवकामानां चेत्यधिदैवतम्
नुसमा ८ ॥ षष्ठः खण्डः ॥ ६ ॥

५ ॥ तथाध्यात्मं वागेवर्क् प्राणः साम तदेतदेतस्यामृच्य-
ढ१ स्यूढ१ साम तस्मादृच्यध्यूढ१ साम गीयते वागेव सा
ऽग्निरम णोऽमस्तत्साम ॥ १ ॥ चक्षुरेवर्गात्मा साम तदेतदेत-
स्यामृयामृच्यध्यूढ१ साम तस्मादृच्यध्यूढ१ साम गीयते
तरिक्षमक्षुरेव सात्माऽमस्तत्साम ॥ २ ॥ श्रोत्रमेवर्ङ्मनः
तदेसाम तदेतदेतस्यामृच्यध्यूढ१ साम तस्मादृच्यध्यूढ१
गीसाम गीयते श्रोत्रमेव सा मनोऽमस्तत्साम ॥ ३ ॥
चन्द्रमथ यदेतदक्ष्णः शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं
च्यध्यूतसाम तदेतदेतस्यामृच्यध्यूढ१साम तस्मादृच्यध्यूढ१
साम ॥साम गीयते अथ यदेवैतदक्ष्णः शुक्लं भाः सैव साऽथ
नीलं यन्नीलं परः कृष्णं तदमस्तत्साम ॥ ४ ॥ अथ य एषो-

ऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क्तत्साम तदुक्थं तद्य
जुस्तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमु
गेष्णौ तौ गेष्णौ यन्नाम तन्नाम ॥ ५ ॥ स एष
चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां चे
तद्य इमे वीणायां गायन्त्येतं ते गायन्ति तस्मात्ते धन
नयः ॥ ६ ॥ अथ य एतदेवं विद्वान्साम गायत्यु
स गायति सोऽमुनैव स एष ये चामुष्मात्पराञ्चो लो
स्तांश्चाप्नोति देवकामांश्च ॥७॥ अथानेनैव ये
स्मादर्वाञ्चो लोकास्तांश्चाप्नोति मनुष्यकामांश्च तस्मा
हैवंविदुद्गाता ब्रूयात् ॥८॥ कं ते काममागायानीत्येष
कामगानस्येष्टे य एवं विद्वान्साम गायति साम गा
॥ ९ ॥ सप्तमः खण्डः ॥ ७ ॥

त्रयो होद्गीथे कुशला बभूवुः शिलकः शालावत्यश्चै
तायनो दाल्भ्यः प्रवाहणो जैवलिरिति ते होचुरुद्गीथे
कुशलाः स्मो हन्तोद्गीथे कथां वदाम इति ॥१॥ तथे
ह समुपविविशुः स ह प्रवाहणो जैवलिरुवाच भगवन्
वग्रे वदतां ब्राह्मणयोर्वदतोर्वाचं श्रोष्यामीति ॥ २
स ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच ह
त्वा पृच्छानीति पृच्छेति होवाच ॥ ३ ॥ का सा
गतिरिति स्वर इति होवाच स्वरस्य का गतिरिति प्रा
इति होवाच प्राणस्य का गतिरित्यन्नमिति होवाचान्न
का गतिरित्याप इति होवाच ॥ ४ ॥ अपां का गति

त्यसौ लोक इति होवाचामुष्य लोकस्य का गतिरिति
न स्वर्गं लोकमतिनयेदिति होवाच स्वर्गं वयं लोकꣳ
सामाभिसंस्थापयाम स्वर्गसꣳस्तावꣳ हि सामेति ॥ ५ ॥
तꣳ ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाचाप्र-
तिष्ठितं वै किल ते दाल्भ्य साम यस्त्वेतर्हि ब्रूयान्मूर्धा
ते विपतिष्यतीति मूर्धा ते विपतेदिति ॥ ६ ॥ हन्ता-
हमेतद्भगवत्तो वेदानीति विद्धीति होवाचामुष्य लोकस्य
का गतिरित्ययं लोक इति होवाचास्य लोकस्य का
गतिरिति न प्रतिष्ठां लोकमतिनयेदिति होवाच प्रतिष्ठां
वयं लोकꣳ सामाभिसꣳस्थापयामः प्रतिष्ठासꣳस्तावꣳ
हि सामेति ॥ ७ ॥ तꣳ ह प्रवाहणो जैवलिरुवाचा-
न्तवद्वै किल ते शालावत्य साम यस्त्वेतर्हि ब्रूयान्मूर्धा
ते विपतिष्यतीति मूर्धा ते विपतेदिति हन्ताहमेतद्भगवत्तो
वेदानीति विद्धीति होवाच ॥ ८ ॥ अष्टमः खण्डः ॥ ८ ॥

अस्य लोकस्य का गतिरित्याकाश इति होवाच
सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त
आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः
परायणम् ॥१॥ स एष परोवरीयानुद्गीथः स एषोऽनन्तः
परोवरीयो हास्य भवति परोवरीयसो ह लोकाञ्जयति
य एतदेवं विद्वान्परोवरीयाꣳसमुद्गीथमुपास्ते ॥ २ ॥
तꣳ हैतमतिधन्वा शौनक उदरशाण्डिल्यायोक्त्वोवाच
यावत्त एनं प्रयाजामुद्गीथं वेदिष्यन्ते परोवरीयो हैभ्य-

स्तामदस्मिँल्लोके जीवनं भविष्यति ॥३॥ तथामुष्मिँल्लो
लोक इति स य एतमेवं विद्वानुपास्ते परोवरीय
हास्यास्मिँल्लोके जीवनं भवति तथामुष्मिँल्लोके लोक इ
लोके लोक इति ॥ ४ ॥ नवमः खण्डः ॥ ९ ॥

मटचीहतेषु कुरुष्वाटिक्या सह जाययोषस्तिर्ह चाक्र
यण इभ्यग्रामे प्रद्राणक उवास ॥ १ ॥ स हेभ्यं कुल्म
षान्खादन्तं बिभिक्षे तꣳहोवाच ॥ नेतोऽन्ये विद्य
यच्च ये म इम उपनिहिता इति ॥२॥ एतेषां मे देहि
होवाच तानस्मै प्रददौ हन्तानुपानमित्युच्छिष्टं वै
पीतꣳस्यादिति होवाच ॥ ३ ॥ न स्विदेतेऽप्युच्छि
इति न वा अजीविष्यमिमां न खादन्निति होवाच का
म उदपानमिति ॥ ४ ॥ स ह खादित्वातिशेषाञ्
याया आजहार साग्र एव सुभिक्षा बभूव तान्प्रतिगृ
निदधौ ॥ ५ ॥ स ह प्रातः संजिहान उवाच यद्बतान्न
लभेमहि लभेमहि धनमात्राꣳ राजासौ यक्ष्यते स
सर्वैरार्त्विज्यैर्वृणीतेति ॥ ६ ॥ तं जायोवाच हन्त पत इ
एव कुल्माषा इति तान्खादित्वामुं यज्ञं विततमेया
॥ ७ ॥ तत्रोद्गातॄनास्तावे स्तोष्यमाणानुपोपविवेश स
प्रस्तोतारमुवाच ॥८॥ प्रस्तोतर्या देवता प्रस्तावमन्वायत्त
तां चेदविद्वान्प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति ॥ ९
एवमेवोद्गातारमुवाचोद्गातर्या देवतोद्गीथमन्वायत्ता
चेदविद्वानुद्गास्यसि मूर्धा ते विपतिष्यतीति ॥१०॥ एवमे

प्रतिहर्तारमुवाच प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता
तां चेदविद्वान्प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति ते ह
मारतास्तूष्णीमासांचक्रिरे ॥११॥ दशमः खण्डः॥१०॥

अथ हैनं यजमान उवाच भगवन्तं वा अहं विविदि-
षाणीत्युषस्तिरस्मि चाक्रायण इति होवाच ॥ १ ॥ स
होवाच भगवन्तं वा अहमेभिः सर्वैरार्त्विज्यैः पर्यैषिषं
भगवतो वा अहमवित्त्यान्यानवृषि ॥ २ ॥ भगवाꣳस्त्वेव
मे सर्वैरार्त्विज्यैरिति तथेत्यथ तर्ह्येत एव समतिसृष्टाः
स्तुवतां यावत्त्वेभ्यो धनं दद्यास्तावन्मम दद्या इति तथेति
ह यजमान उवाच ॥ ३ ॥ अथ हैनं प्रस्तोतोपससाद
प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रस्तो-
ष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत्कतमा
सा देवतेति ॥ ४ ॥ प्राण इति होवाच सर्वाणि ह वा
इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते
सैषा देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रास्तोष्यो
मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति ॥ ५ ॥ अथ हैनमु-
द्गातोपससादोद्गातर्या देवतोद्गीथमन्वायत्ता तां चेदविद्वा-
नुद्गास्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत्क-
तमा सा देवतेति ॥ ६ ॥ आदित्य इति होवाच सर्वाणि
ह वा इमानि भूतान्यादित्यमुच्चैः सन्तं गायन्ति सैषा
देवतोद्गीथमन्वायत्ता तां चेदविद्वानुदगास्यो मूर्धा ते
व्यपतिष्यत्तथोक्तस्य मयेति ॥ ७ ॥ अथ हैनं प्रतिहर्तो-

पससाद प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता तां चेद
द्वान्प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति मा भग
नवोचत्कतमा सा देवतेति ॥ ८ ॥ अन्नमिति होवा
सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणा
जीवन्ति सैषा देवता प्रतिहारमन्वायत्ता तां चेदविद्वा
त्यहरिष्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति तथोक्त
मयेति ॥ ९ ॥ एकादशः खण्डः ॥ ११ ॥

अथातः शौव उद्गीथस्तद्ध बको दाल्भ्यो ग्लावो
मैत्रेयः स्वाध्यायमुद्वव्राज ॥ १ ॥ तस्मै श्वा श्वेतः प्रादु
भूव तमन्ये श्वान उपसमेत्योचुरन्नं नो भगवानागाय
शनायाम वा इति ॥ २ ॥ तान्होवाचेहैवमा प्रातरुप
मीयायेति तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः प्र
पालयांचकार ॥ ३ ॥ ते ह यथैवेदं बहिष्पवमानेन स
ष्यमाणाः संरब्धाः सर्पन्तीत्येव मासस्रृपुस्ते ह समु
विश्य हिंचक्रुः ॥ ४ ॥ ओ३मदा३मों३पिबा३मो३दे
वरुणः प्रजापतिः सविता३न्नमिहा२हरदन्नपते२न्नमि
हरा३हरो३मिति ॥ ५ ॥ द्वादशः खण्डः ॥ १२ ॥

अयं वाव लोको हाउकारो वायुर्हाइकारश्चन्द्र
अथकार आत्मेहकारोऽग्निरीकारः ॥ १ ॥ आदित्य ऊका
निहव एकारो विश्वेदेवा औहोइकारः प्रजापतिर्हिंका
प्राणः स्वरोऽन्नं या वाग्विराट् ॥ २ ॥ अनिरुक्तस्त्रयोद
स्तोभः संचरो हुंकारः ॥ ३ ॥ दुग्धेऽस्मै वाग्दोहं

चो दोहोऽन्नवानन्नादो भवति य एतामेवꣳसाम्नामुप-
निषदं वेदोपनिषदं वेद इति ॥ ४ ॥ त्रयोदशः खण्डः
॥ १३ ॥ इति प्रथमः प्रपाठकः ॥ १ ॥

## अथ द्वितीयोऽध्यायः ॥ २ ॥

ॐ समस्तस्य खलु साम्न उपासनꣳसाधु यत्खलु
साधु तत्सामेत्याचक्षते यदसाधु तदसामेति ॥ १ ॥ तदुता-
प्याहुः साम्नैनमुपागादिति साधुनैनमुपागादित्येव तदा-
हुरसाम्नैनमुपागादित्यसाधुनैनमुपागादित्येव तदाहुः ॥ २ ॥
अथोताप्याहुः साम नो बतेति यत्साधु भवति साधु
बतेत्येव तदाहुरसाम नो बतेति यदसाधु भवत्यसाधु
बतेत्येव तदाहुः ॥ ३ ॥ स य एतदेवं विद्वान्साधु सामे-
त्युपास्तेऽभ्याशो ह यदेनꣳसाधवो धर्मा आ च गच्छे-
युरुप च नमेयुः ॥ ४ ॥ इति प्रथमः खण्डः ॥ १ ॥
लोकेषु पञ्चविधꣳसामोपासीत पृथिवी हिंकारोऽग्निः
प्रस्तावोऽन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधनमि-
त्यूर्ध्वेषु ॥ १ ॥ अथावृत्तेषु द्यौर्हिंकार आदित्यः प्रस्तावो-
ऽन्तरिक्षमुद्गीथोऽग्निः प्रतिहारः पृथिवी निधनम् ॥ २ ॥
कल्पन्ते हास्मै लोका ऊर्ध्वाश्चावृत्ताश्च य एतदेवं विद्वाँ-
ल्लोकेषु पञ्चविधꣳसामोपास्ते ॥ ३ ॥ इति द्वितीयः
खण्डः ॥ २ ॥
वृष्टौ पञ्चविधꣳसामोपासीत पुरो वातो हिंकारो मेघो
जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति

स प्रतिहारः ॥ १ ॥ उद्गृह्णाति तन्निधनं वर्षति हास्मै
यति ह य एतदेवं विद्वान्वृष्टौ पञ्चविधꣳसामोपास्ते ।
इति तृतीयः खण्डः ॥ ३ ॥

सर्वास्वप्सु पञ्चविधꣳसामोपासीत मेघो यत्संप्लवते
हिंकारो यद्वर्षति स प्रस्तावो याः प्राच्यः स्यन्दन्ते
उद्गीथो याः प्रतीच्यः स प्रतिहारः समुद्रो निध
॥ १ ॥ न हाप्सु प्रैत्यप्सुमान्भवति य एतदेवं वि
न्सर्वास्वप्सु पञ्चविधꣳसामोपास्ते ॥ २ ॥ इति च
खण्डः ॥ ४ ॥

ऋतुषु पञ्चविधꣳ सामोपासीत वसन्तो हिं
ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत्प्रतिहारो हेमन्तो नि
नम् ॥ १ ॥ कल्पन्ते हास्मा ऋतव ऋतुमान्भवति
एतदेवं विद्वानृतुषु पञ्चविधꣳसामोपास्ते ॥ २ ॥
पञ्चमः खण्डः ॥ ५ ॥

पशुषु पञ्चविधꣳसामोपासीताजा हिंकारोऽ
प्रस्तावो गाव उद्गीथोऽश्वाः प्रतिहारः पुरुषो निध
॥ १ ॥ भवन्ति हास्य पशवः पशुमान्भवति य एत
विद्वान्पशुषु पञ्चविधꣳसामोपास्ते ॥ २ ॥ इति
खण्डः ॥ ६ ॥

प्राणेषु पञ्चविधं परोवरीयः सामोपासीत प्रा
हिंकारो वाक्प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारो म
निधनं परोवरीयाꣳसि वैतानि ॥ १ ॥ परोवरीयो ह

ति परोवरीयसो ह लोकाञ्जयति य एतदेवं विद्वान्प्रा-
पञ्चविधं परोवरीयः सामोपास्त इति तु पञ्चविधस्य
॥ इति सप्तमः खण्डः ॥ ७ ॥

अथ सप्तविधस्य वाचि सप्तविधꣳ सामोपासीत
च वाचो हुमिति स हिंकारो यत्प्रेति स प्रस्तावो
ति स आदि ॥ १ ॥ यदुदिति स उद्गीथो यत्प्रतीति
प्रतिहारो यदुपेति स उपद्रवो यन्नीति तन्निधनम्
॥ २ ॥ दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो
ति य एतदेवं विद्वान्वाचि सप्तविधꣳ सामोपास्ते
॥ ३ ॥ इत्यष्टमः खण्डः ॥ ८ ॥

अथ खल्वमुमादित्यꣳ सप्तविधꣳ सामोपासीत सर्वदा
तेन साम मां प्रति मां प्रतीति सर्वेण समस्तेन साम
॥ १ ॥ तस्मिन्निमानि सर्वाणि भूतान्यन्वायत्तानीति
तस्य यत्पुरोदयात्स हिंकारस्तदस्य पशवोऽन्वायत्ता-
स्तस्मात्ते हिंकुर्वन्ति हिंकारभाजिनो ह्येतस्य साम्नः ॥२॥
यत्प्रथमोदिते स प्रस्तावस्तदस्य मनुष्या अन्वायत्ता-
स्तस्मात्ते प्रस्तुतिकामाः प्रशꣳसाकामाः प्रस्तावभाजिनो
ह्येतस्य साम्नः ॥ ३ ॥ अथ यत्सङ्गववेलायाꣳ स आदि-
स्तदस्य वयाꣳस्यन्वायत्तानि तस्मात्तान्यन्तरिक्षेऽनारम्भ-
णान्यादायात्मानं परिपतन्त्यादिभाजीनि ह्येतस्य साम्नः
॥ ४ ॥ अथ यत्संप्रति मध्यन्दिने स उद्गीथस्तदस्य देवा
अन्वायत्तास्तस्मात्ते सत्तमाः प्राजापत्यानामुद्गीथभाजिनो

ह्येतस्य साम्नः ॥ ५ ॥ अथ यदूर्ध्वं मध्यंदिनात्प्रा
ह्णात्स प्रतिहारस्तदस्य गर्भा अन्वायत्तास्तस्मात्ते प्र
नावपद्यन्ते प्रतिहारभाजिनो ह्येतस्य साम्नः ॥ ६ ॥
यदूर्ध्वमपराह्णात्प्रागस्तमयात्स उपद्रवस्तदस्यारण्या
न्वायत्तास्तस्मात्ते पुरुषं दृष्ट्वा कक्षꣳ श्वभ्रमित्युपद्र
पद्रवभाजिनो ह्येतस्य साम्नः ॥ ७ ॥ अथ यत्प्रथ
मिते तन्निधनं तदस्य पितरोऽन्वायत्तास्तस्मात्तान्नि
निधनभाजिनो ह्येतस्य साम्न एवं खल्वमुमादित्यꣳ
विधꣳ सामोपास्ते ॥ ८ ॥ इति नवमः खण्डः ॥ ९

अथ खल्वात्मसंमितमतिमृत्यु सप्तविधꣳसामोपा
हिंकार इति त्र्यक्षरं प्रस्ताव इति त्र्यक्षरं तत्समम् ॥
आदिरिति द्व्यक्षरं प्रतिहार इति चतुरक्षरं तत
तत्समम् ॥ २ ॥ उद्गीथ इति त्र्यक्षरमुपद्रव इति च
क्षरं त्रिभिस्त्रिभिः समं भवत्यक्षरमतिशिष्यते त्र्य
तत्समम् ॥ ३ ॥ निधनमिति त्र्यक्षरं तत्सममेव भ
तानि ह वा एतानि द्वाविꣳशतिरक्षराणि ॥ ४ ॥
विꣳशत्यादित्यमाप्नोत्येकविꣳशो वा इतोऽसावा
द्वाविꣳशेन परमादित्याज्जयति तन्नाकं तद्विशोकम् ॥
आप्नोतीहादित्यस्य जयं परो हास्यादित्यजयाज्जयो भ
य एतदेवं विद्वानात्मसंमितमतिमृत्यु सप्तविधꣳ सा
पास्ते सामोपास्ते ॥ ६ ॥ इति दशमः खण्डः ॥ १

मनो हिंकारो वाक्प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रति

नात्प्राणो निधनमेतद्गायत्रं प्राणेषु प्रोतम् ॥ १ ॥ स य एव-
त्ते प्रमेतद्गायत्रं प्राणेषु प्रोतं वेद प्राणी भवति सर्वमायुरेति
। ६ ॥ ग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या
ारण्या महामनाः स्यात्तद्व्रतम् ॥ २ ॥ इत्येकादशः खण्डः ॥ ११ ॥
त्युपद्व अभिमन्थति स हिंकारो धूमो जायते स प्रस्तावो
यत्प्रथ ज्वलति स उद्गीथोऽङ्गारा भवन्ति स प्रतिहार उपशा-
त्तान्नि म्यति तन्निधनं संशाम्यति तन्निधनमेतद्रथन्तरमग्नौ
दित्यं प्रोतम् ॥ १ ॥ स य एवमेतद्रथन्तरमग्नौ प्रोतं वेद ब्रह्म-
ः ॥ वर्चस्यन्नादो भवति सर्वमायुरेति ज्योग्जीवति महा-
ग्रामो न्प्रजया पशुभिर्भवति महान्कीर्त्या न प्रत्यङ्ङग्निमाचा-
मम् ॥ मेन्न निष्ठीवेत्तद्व्रतम् ॥ २ ॥ इति द्वादशः खण्डः ॥ १२ ॥
ं तत उपमन्त्रयते स हिंकारो ज्ञपयते स प्रस्तावः स्त्रिया
इति सह शेते स उद्गीथः प्रतिस्त्री सह शेते स प्रतिहारः कालं
यते गच्छति तन्निधनं पारं गच्छति तन्निधनमेतद्वामदेव्यं
मिव मिथुने प्रोतम् ॥ १ ॥ स य एवमेतद्वामदेव्यं मिथुने
४ ॥ प्रोतं वेद मिथुनीभवति मिथुनान्मिथुनात्प्रजायते
सावा सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति
कम् ॥ महान्कीर्त्या न कांचन परिहरेत्तद्व्रतम् ॥२॥ इति त्रयो-
दशः खण्डः ॥ १३ ॥
धं स उद्यन्हिंकार उदितः प्रस्तावो मध्यन्दिन उद्गीथोऽप-
॥ १ राह्णः प्रतिहारोऽस्तं यन्निधनमेतद्बृहदादित्ये प्रोतम् ॥१॥
ं प्रति स य एवमेतद्बृहदादित्ये प्रोतं वेद तेजस्व्यन्नादो भवति

सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भ
महान्कीर्त्या तपन्तं न निन्देत्तद्व्रतम् ॥ २ ॥ इति
र्दशः खण्डः ॥ १४ ॥

अभ्राणि संप्लवन्ते स हिंकारो मेघो जायते स प्रस्
वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहार
ह्णाति तन्निधनमेतद्वैरूपं पर्जन्ये प्रोतम् ॥ १ ॥
एवमेतद्वैरूपं पर्जन्ये प्रोतं वेद विरूपाꣳश्च सुरूपा
पशूनवरुन्धे सर्वमायुरेति ज्योग्जीवति महान्प्रजया
भिर्भवति महान्कीर्त्या वर्षन्तं न निन्देत्तद्व्रतम् ॥
इति पञ्चदशः खण्डः ॥ १५ ॥

वसन्तो हिंकारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः
रत्प्रतिहारो हेमन्तो निधनमेतद्वैराजमृतुषु प्रोतम् ॥
स य एवमेतद्वैराजमृतुषु प्रोतं वेद विराजति प्र
पशुभिर्ब्रह्मवर्चसेन सर्वमायुरेति ज्योग्जीवति महा
जया पशुभिर्भवति महान्कीर्त्यर्तुं न निन्देत्तद्व्रतम् ॥
इति षोडशः खण्डः ॥ १६ ॥

पृथिवी हिंकारोऽन्तरिक्षं प्रस्तावो द्यौरुद्गीथो
प्रतिहारः समुद्रो निधनमेताः शक्वर्यो लोकेषु प्रो
॥ १ ॥ स य एवमेताः शक्वर्यो लोकेषु प्रोता वेद
भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभि
वति महान्कीर्त्या लोकान्न निन्देत्तद्व्रतम् ॥ २ ॥
सप्तदशः खण्डः ॥ १७ ॥

अजा हिंकारोऽवयः प्रस्तावो गाव उद्गीथोऽश्वाः प्रति-
हारः पुरुषो निधनमेता रेवत्यः पशुषु प्रोताः ॥ १ ॥ स
य एवमेता रेवत्यः पशुषु प्रोता वेद पशुमान्भवति सर्व-
मायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति
महान्कीर्त्या पशून्न निन्देत्तद्व्रतम् ॥ २ ॥ इत्यष्टादशः
खण्डः ॥ १८ ॥

लोम हिंकारस्त्वक्प्रस्तावो माꣳसमुद्गीथोऽस्थि प्रति-
हारो मज्जा निधनमेतद्यज्ञायज्ञीयमङ्गेषु प्रोतम् ॥ १ ॥
स य एवमेतद्यज्ञायज्ञीयमङ्गेषु प्रोतं वेदाऽङ्गी भवति
नाङ्गेन विहूर्छति सर्वमायुरेति ज्योग्जीवति महान्प्रजया
पशुभिर्भवति महान्कीर्त्या संवत्सरं मज्ज्ञो नाश्नीयात्तद्व्रतं
मज्ज्ञो नाश्नीयादिति वा ॥ २ ॥ इत्येकोनविंशः खण्डः ॥ १९ ॥

अग्निर्हिंकारो वायुः प्रस्ताव आदित्य उद्गीथो नक्ष-
त्राणि प्रतिहारश्चन्द्रमा निधनमेतद्राजनं देवतासु प्रोतम्
॥ १ ॥ स य एवमेतद्राजनं देवतासु प्रोतं वेदैतासामेव
देवतानाꣳ सलोकताꣳ सार्ष्टिताꣳ सायुज्यं गच्छति
सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति
महान्कीर्त्या ब्राह्मणान्न निन्देत्तद्व्रतम् ॥ २ ॥ इति विंशः
खण्डः ॥ २० ॥

त्रयी विद्या हिंकारस्त्रय इमे लोकाः स प्रस्तावोऽग्नि-
र्वायुरादित्यः स उद्गीथो नक्षत्राणि वयाꣳसि मरीचयः
स प्रतिहारः सर्पा गन्धर्वाः पितरस्तन्निधनमेतत्साम

सर्वस्मिन्प्रोतम् ॥ १ ॥ स य एवमेतत्साम सर्वस्मि
वेद सर्वꣳ ह भवति ॥२॥ तदेष श्लोकः ॥ यानि प
त्रीणि त्रीणि तेभ्यो न ज्यायः परमन्यदस्ति ॥३॥ य
स वेद सर्वꣳ सर्वा दिशो बलिमस्मै हरन्ति सर्वम
त्युपासीत तद्व्रतं तद्व्रतम् ॥४॥ इत्येकविंशः खण्डः॥

विनर्दि साम्नो वृणे पशव्यमित्यग्नेरुद्गीथोऽनिरुक्तः प्र
पतेर्निरुक्तः सोमस्य मृदु श्लक्ष्णं वायोः श्लक्ष्णं बल
न्द्रस्य क्रौञ्चं बृहस्पतेरपध्वान्तं वरुणस्य तान्सर्वानेवो
वेत वारुणं त्वेव वर्जयेत् ॥ १ ॥ अमृतत्वं देवेभ्य आ
यानीत्यागायेत्स्वधां पितृभ्य आशां मनुष्येभ्यस्तृणो
पशुभ्यः स्वर्गं लोकं यजमानायान्नमात्मन आगाय
त्येतानि मनसा ध्यायन्नप्रमत्तः स्तुवीत ॥ २ ॥ सर्वे स्
इन्द्रस्यात्मानः सर्व ऊष्माणः प्रजापतेरात्मानः सर्वे स्
मृत्योरात्मानस्तं यदि स्वरेषूपालभेतेन्द्रꣳ शरणं प्र
अभूवं स त्वा प्रतिवक्ष्यतीत्येनं ब्रूयात् ॥ ३ ॥ अथ य
नमूष्मसूपालभेत प्रजापतिꣳ शरणं प्रपन्नोऽभूवं स
प्रतिपेक्ष्यतीत्येनं ब्रूयादथ यद्येनꣳ स्पर्शेषूपालभेत मृ
शरणं प्रपन्नोऽभूवं स त्वा प्रतिधक्ष्यतीत्येनं ब्रूयात् ॥
सर्वे स्वरा घोषवन्तो बलवन्तो वक्तव्या इन्द्रे बलं द
नीति सर्वे ऊष्माणोऽग्रस्ता अनिरस्ता विवृत्ता वक्त
प्रजापतेरात्मानं परिददानीति सर्वे स्पर्शा लेशेनान

हिता वक्तव्या मृत्योरात्मानं परिहराणीति ॥५॥ इति
विंशः खण्डः ॥ २२ ॥

त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमस्तप
द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमा-
नमाचार्यकुलेऽवसादयन्सर्व एते पुण्यलोका भवन्ति
ब्रह्मसꣳस्थोऽमृतत्वमेति ॥ १ ॥ प्रजापतिर्लोकानभ्यत-
भ्योऽभितप्तेभ्यस्त्रयी विद्या संप्रास्रवत्तामभ्यतपत्तस्या
भितप्ताया एतान्यक्षराणि संप्रास्रवन्त भूर्भुवः-
रिति ॥ २ ॥ तान्यभ्यतपत्तेभ्योऽभितप्तेभ्य ॐकारः
प्रास्रवत्तद्यथा शङ्कुना सर्वाणि पर्णानि संतृण्णान्येवमों-
रेण सर्वा वाक् संतृण्णोंकार एवेदꣳ सर्वमोंकार
एवेदꣳ सर्वम् ॥ ३ ॥ इति त्रयोविंशः खण्डः ॥ २३ ॥

ब्रह्मवादिनो वदन्ति यद्वसूनां प्रातःसवनꣳ रुद्राणां
मध्यन्दिनꣳ सवनमादित्यानां च विश्वेषां च देवानां
तृतीयसवनम् ॥ १ ॥ क्व तर्हि यजमानस्य लोक इति स
यस्तं न विद्यात्कथं कुर्यादथ विद्वान्कुर्यात् ॥ २ ॥ पुरा
प्रातरनुवाकस्योपाकरणाज्जघनेन गार्हपत्यस्योदङ्मुख उप-
विश्य स वासवꣳ सामाभिगायति ॥ ३ ॥ लो ३ कद्वा-
रमपावा ३ र्णू ३३ पश्येम त्वा वयꣳरा ३ ३ ३ ३ ३ हुं ३
आ ३३ जा ३ यो ३ आ ३२१११ इति ॥ ४ ॥ अथ
जुहोति नमोऽग्नये पृथिवीक्षिते लोकक्षिते लोकं मे यज-
मानाय विन्दैष वै यजमानस्य लोक एतास्मि ॥ ५ ॥

अत्र यजमानः परस्तादायुषः स्वाहाऽपजहि परिघ
क्त्वोत्तिष्ठति तस्मै वसवः प्रातःसवनँ संप्रयच्
॥ ६ ॥ पुरा माध्यन्दिनस्य सवनस्योपाकरणाज्जघने
ध्रो यस्योदङ्मुख उपविश्य स रौद्रँ सामाभिगा
॥७॥ लो३कद्वारमपावा ३ र्णू ३३ पश्येम त्वा वयं
३३३३३ हुं ३ आ ३३ जा ३ यो ३ आ ३२१११
॥ ८ ॥ अथ जुहोति नमो वायवेऽन्तरिक्षक्षिते लोक
लोकं मे यजमानाय विन्दैष वै यजमानस्य लोक ए
॥ ९ ॥ अत्र यजमानः परस्तादायुषः स्वाहाऽपजहि
घमित्युक्त्वोत्तिष्ठति तस्मै रुद्रा माध्यन्दिनँ स
संप्रयच्छन्ति ॥ १० ॥ पुरा तृतीयसवनस्योपाकरणा
नेनाहवनीयस्योदङ्मुख उपविश्य स आदित्यँ स
देवँ सामाभिगायति ॥ ११ ॥ लो ३ कद्वारमपाव
र्णू ३३ पश्येम त्वा वयँस्वारा ३३३३३ हुं ३ आ
ज्या ३ यो ३ आ ३२१११इति॥१२॥ आदित्यमथ
देवं लो ३ कद्वारमपावा ३ र्णू ३६ पश्येम त्वा
साम्रा ३६३३३ हुं ३ आ ३३३ यो ३ आ ३२
इति ॥ १३ ॥ अथ जुहोति नम आदित्येभ्यश्च
भ्यश्च देवेभ्यो दिविक्षिद्भ्यो लोकक्षिद्भ्यो लोकं मे यज
नाय विन्दत ॥ १४ ॥ एष वै यजमानस्य लोक ए
स्म्यत्र यजमानः परस्तादायुषः स्वाहाऽपहतपरिघमि
क्त्वोत्तिष्ठति ॥ १५ ॥ तस्मा आदित्याश्च विश्वे च दे

तृतीयं सवनꣳसंप्रयच्छन्त्येष ह वै यज्ञस्य मात्रां वेद एवं वेद य एवं वेद ॥ १६ ॥ इति चतुर्विंशः खण्डः २४ ॥ इति द्वितीयः प्रपाठकः ॥ २ ॥

## अथ तृतीयोऽध्यायः ॥ ३ ॥

ॐ असौ वा आदित्यो देवमधु तस्य द्यौरेव तिरश्चीनवꣳशोऽन्तरिक्षमपूपो मरीचयः पुत्राः ॥ १ ॥ तस्य ये प्राञ्चो रश्मयस्ता एवास्य प्राच्यो मधुनाड्य ऋच एष मधुकृत ऋग्वेद एव पुष्पं ता अमृता आपस्ता वा एता ऋचः॥२॥ एतमृग्वेदमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥ ३ ॥ तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य रोहितꣳरूपम् ॥ ४ ॥ इति प्रथमः खण्डः ॥ १ ॥

अथ येऽस्य दक्षिणा रश्मयस्ता एवास्य दक्षिणा मधुनाड्यो यजूꣳष्येव मधुकृतो यजुर्वेद एव पुष्पं ता अमृता आपः ॥ १ ॥ तानि वा एतानि यजूꣳष्येतं यजुर्वेदमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥ तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य शुक्लꣳ रूपम् ॥ ३ ॥ इति द्वितीयः खण्डः ॥ २ ॥

अथ येऽस्य प्रत्यञ्चो रश्मयस्ता एवास्य प्रतीच्यो मधुनाड्यः सामान्येव मधुकृतः सामवेद एव पुष्पं ता अमृता आपः ॥ १ ॥ तानि वा एतानि सामान्येतꣳ सामवेद-

मभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्न॥ त
रसोऽजायत ॥ २ ॥ तद्व्यक्षरत्तदादित्यमभितोऽश्रय ॥ स
एतद्यदेतदादित्यस्य परं कृष्णꣳरूपम् ॥ ३ ॥ इति तृतीय
खण्डः ॥ ३ ॥

अथ येऽस्योदञ्चो रश्मयस्ता एवास्योदीच्यो मधुनाडय
ऽथर्वाङ्गिरस एव मधुकृत इतिहासपुराणं पुष्पं
अमृता आपः ॥ १ ॥ ते वा एतेऽथर्वाङ्गिरस एतदि
हासपुराणमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रि
वीर्यमन्नाद्यꣳरसोऽजायत ॥ २ ॥ तद्व्यक्षरत्तदादित्य
भितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य परं कृष्णꣳरू
॥ ३ ॥ इति चतुर्थः खण्डः ॥ ४ ॥

अथ येऽस्योर्ध्वा रश्मयस्ता एवास्योर्ध्वा मधुनाड्यो
गुह्या एवादेशा मधुकृतो ब्रह्मैव पुष्पं ता अमृता
॥ १ ॥ ते वा एते गुह्या आदेशा एतद्ब्रह्माभ्यतपꣳस्त
भितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजा
॥ २ ॥ तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेत
दित्यस्य मध्ये क्षोभत इव ॥ ३ ॥ ते वा एते रसा
रसा वेदा हि रसास्तेषामेते रसास्तानि वा एतान्यमृ
नाममृतानि वेदा ह्यमृतास्तेषामेतान्यमृतानि ॥ ४ ॥
पञ्चमः खण्डः ॥ ५ ॥

तद्यत्प्रथममसृतं तद्वसव उपजीवन्त्यग्निना मुखेन
वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्य

॥ त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति
॥ स य एतदेवममृतं वेद वसूनामेवैको भूत्वा-
नैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स य एतदेव रूप-
मभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥ स यावदादित्यः
स्तादुदेता पश्चादस्तमेता वसूनामेव तावदाधिपत्यꣳ
राज्यं पर्येता ॥ ४ ॥ इति षष्ठः खण्डः ॥ ६ ॥

अथ यद्द्वितीयममृतं तद्रुद्रा उपजीवन्तीन्द्रेण मुखेन
देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति
॥ त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति
॥ स य एतदेवममृतं वेद रुद्राणामेवैको भूत्वेन्द्रे-
मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभि-
शत्येतस्माद्रूपादुदेति ॥ ३ ॥ स यावदादित्यः पुर-
उदेता पश्चादस्तमेता द्विस्तावद्दक्षिणत उदेतोत्तरतो-
मेता रुद्राणामेतावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥४॥
सप्तमः खण्डः ॥ ७ ॥

अथ यत्तृतीयममृतं तदादित्या उपजीवन्ति वरुणेन
न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा
यन्ति ॥ १ ॥ त एतदेव रूपमभिसंविशन्त्येतस्माद्रू-
दुद्यन्ति ॥ २ ॥ स य एतदेवामृतं वेदादित्यानामे-
को भूत्वा वरुणेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स
तदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥ स
वदादित्यो दक्षिणत उदेतोत्तरतोऽस्तमेता द्विस्तावत्प-

श्चादुदेता पुरस्तादस्तमेताऽऽदित्यानामेव तावदाधि
स्वाराज्यं पर्येता ॥ ४ ॥ इत्यष्टमः खण्डः ॥ ८ ॥

अथ यच्चतुर्थममृतं तन्मरुत उपजीवन्ति सोमेन
न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृ
॥ १ ॥ त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादु
॥ २ ॥ स य एतदेवममृतं वेद मरुतामेवैको
सोमेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव
मभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥ स यावदा
पश्चादुदेता पुरस्तादस्तमेता द्विस्तावदुत्तरत उदेता
णतोऽस्तमेता मरुतामेव तावदाधिपत्यँ स्वाराज्यं
॥ ४ ॥ इति नवमः खण्डः ॥ ९ ॥

अथ यत्पञ्चमममृतं तत्साध्या उपजीवन्ति ब्र
मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं
तृप्यन्ति ॥ १ ॥ त एतदेव रूपमभिसंविशन्त्येतस्मा
पादुद्यन्ति ॥ २ ॥ स य एतदेवममृतं वेद साध्याना
वैको भूत्वा ब्रह्मणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यन्ति
एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३
यावदादित्य उत्तरत उदेता दक्षिणतोऽस्तमेता द्विस्ता
र्ध्वमुदेतार्वागस्तमेता साध्यानामेव तावदाधिपत्यँ
राज्यं पर्येता ॥ ४ ॥ इति दशमः खण्डः ॥ १० ॥

अथ तत ऊर्ध्व उदेत्यनेनैवोदेता नास्तमेतैकल
मध्ये स्थाता तदेष श्लोकः॥१॥ न वै तत्र न निम्लोच न

य कदाचन ॥ देवास्तेनाहꣳ सत्येन मा विराधिषि
णेति ॥ २ ॥ न ह वा अस्मा उदेति न निम्लोचति
द्दिवा हैवास्मै भवति य एतामेव ब्रह्मोपनिषदं वेद
॥ तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः
भ्यस्तद्धैतदुद्दालकायारुणये ज्येष्ठाय पुत्राय पिता ब्रह्म
वाच ॥ ४ ॥ इदं वाव तज्ज्येष्ठाय पुत्राय पिता ब्रह्म
यात्प्रणाय्याय वान्तेवासिने ॥ ५ ॥ नान्यस्मै कस्मै-
यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां
ादेतदेव ततो भूय इत्येतदेव ततो भूय इति ॥ ६ ॥
येकादशः खण्डः ॥ १ ॥

गायत्री वा इदꣳ सर्वं भूतं यदिदं किंच वाग्वै
यत्री वाग्वा इदꣳ सर्वं भूतं गायति च त्रायते च
१ ॥ या वै सा गायत्री यं वाव सा येयं पृथिव्यस्याꣳ
ꣳ सर्वं भूतं प्रतिष्ठितमेतामेव नातिशीयते ॥ २ ॥
वै सा पृथिवी यं वाव सा यदिदमस्मिन्पुरुषे शरीर-
स्मिन्हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते ॥३॥
तत्पुरुषे शरीरमिदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे
यमस्मिन्हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते
४ ॥ सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाभ्य-
क्तम् ॥५॥ तावानस्य महिमा ततो ज्यायाꣳश्च पूरुषः ॥
दोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवीति ॥ ६ ॥
द्वै तद्ब्रह्मेतीदं वाव तद्योऽयं बहिर्धा पुरुषादाकाशो यो

वै स बहिर्धा पुरुषादाकाशः ॥ ७ ॥ अयं वाव स
यमन्तः पुरुष आकाशो यो वै सोऽन्तःपुरुष आकाशः
अयं वाव स योऽयमन्तर्हृदय आकाशस्तदेतत्पूर्णम
पूर्णमप्रवर्तिनीᳫं श्रियं लभते य एवं वेद ॥ ९ ॥
द्वादशः खण्डः ॥ १२ ॥

तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषयः स
प्राङ्सुषिः स प्राणस्तच्चक्षुः स आदित्यस्तत्तेजो
द्यमित्युपासीत तेजस्व्यन्नादो भवति य एवं वेद ॥
अथ योऽस्य दक्षिणः सुषिः स व्यानस्तच्छ्रोत्रᳫं स
मास्तदेतच्छ्रीश्च यशश्चेत्युपासीत श्रीमान्यशस्वी
य एवं वेद ॥ २ ॥ अथ योऽस्य प्रत्यङ् सुषिः सो
सा वाक् सोऽग्निस्तदेतद्ब्रह्मवर्चसमन्नाद्यमित्युपासीत
वर्चस्व्यन्नादो भवति य एवं वेद ॥ ३ ॥ अथ यो
दङ् सुषिः स समानस्तन्मनः स पर्जन्यस्तदेतत्की
व्युष्टिश्चेत्युपासीत कीर्तिमान्व्युष्टिमान्भवति य एवं
॥ ४ ॥ अथ योऽस्योर्ध्वः सुषिः स उदानः स वायु
आकाशस्तदेतदोजश्च महश्चेत्युपासीतौजस्वी महस्
वति य एवं वेद ॥ ५ ॥ ते वा एते पञ्च ब्रह्मपु
स्वर्गस्य लोकस्य द्वारपाः स य एतानेवं पञ्च ब्रह्मपु
न्स्वर्गस्य लोकस्य द्वारपान्वेदास्य कुले वीरो जायते
पद्यते स्वर्गं लोकं य एतानेवं पञ्च ब्रह्मपुरुषान्स्व
लोकस्य द्वारपान्वेद ॥ ६ ॥ अथ यदतः परो दिवो

ते विश्वतःपृष्ठेषु सर्वतःपृष्ठेष्वनुत्तमेषूत्तमेषु लोके-
ं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिस्तस्यैषा
॥ ७ ॥ यत्रैतदस्मिञ्छरीरे सꣳस्पर्शेनोष्णिमानं
नाति तस्यैषा श्रुतिर्यत्रैतत्कर्णावपिगृह्य निनदमिव
रिवाग्नेरिव ज्वलत उपशृणोति तदेतद्दृष्टं च श्रुतं चे-
सीत चक्षुष्यः श्रुतो भवति य एवं वेद य एवं वेद
॥ इति त्रयोदशः खण्डः ॥ १३ ॥

र्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीताथ
क्रतुमयः पुरुषो यथा क्रतुरस्मिँल्लोके पुरुषो भवति
ः प्रेत्य भवति स क्रतुं कुर्वीत ॥ १ ॥ मनोमयः
शरीरो भारूपः सत्यसंकल्प आकाशात्मा सर्वकर्मा
ामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्य-
ः ॥ २ ॥ एष म आत्मान्तर्हृदयेऽणीयान्व्रीहेर्वा
ा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा एष
त्मान्तर्हृदये ज्यायान्पृथिव्या ज्यायानन्तरिक्षाज्ज्या-
द्वो ज्यायानेभ्यो लोकेभ्यः ॥३॥ सर्वकर्मा सर्वकामः
न्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर एष म
ान्तर्हृदय एतद्ब्रह्मैतमितः प्रेत्याभिसंभवितास्मीति
स्यादद्धा न विचिकित्सास्तीति ह स्माह शाण्डिल्यः
ण्डल्यः ॥ ४ ॥ इति चतुर्दशः खण्डः ॥ १४ ॥

न्तरिक्षोदरः कोशो भूमिबुध्नो न जीर्यति दिशो
स्य स्रक्तयो द्यौरस्योत्तरं बिलꣳ स एष कोशो वसु-

धानस्तस्मिन्विश्वमिदꣳ श्रितम् ॥ १ ॥ तस्य
दिग्जुहूर्नाम सहमाना नाम दक्षिणा राज्ञी नाम
सुभूता नामोदीची तासां वायुर्वत्सः स य एतमे
दिशां वत्सं वेद न पुत्ररोदꣳ रोदिति सोऽह
वायुं दिशां वत्सं वेद मापुत्ररोदꣳ रुदम् ॥ २ ॥
कोशं प्रपद्येऽमुनाऽमुनाऽमुना प्राणं प्रपद्येऽमुना
ऽमुना भूः प्रपद्येऽमुनाऽमुनाऽमुना भुवः प्रपद्ये
मुनाऽमुना स्वः प्रपद्येऽमुनाऽमुनाऽमुना ॥ ३ ॥
वोचं प्राणं प्रपद्य इति प्राणो वा इदꣳ सर्वं भूतं
किंच तमेव तत्प्रापत्सि ॥ ४ ॥ अथ यदवोचं भूः
इति पृथिवीं प्रपद्येऽन्तरिक्षं प्रपद्ये दिवं प्रपद्ये इत्ये
वोचम् ॥ ५ ॥ अथ यदवोचं भुवः प्रपद्य इत्यग्नि
वायुं प्रपद्य आदित्यं प्रपद्य इत्येव तदवोचम् ॥ ६
यदवोचꣳ स्वः प्रपद्य इत्यृग्वेदं प्रपद्ये यजुर्वेदं
सामवेदं प्रपद्य इत्येव तदवोचं तदवोचम् ॥ ७
पञ्चदशः खण्डः ॥ १५ ॥

पुरुषो वाव यज्ञस्तस्य यानि चतुर्विꣳशति
तत्प्रातःसवनं चतुर्विꣳशत्यक्षरा गायत्री गायत्रं प्रात
तदस्य वसवोऽन्वायत्ताः प्राणा वाव वसव एते
सर्वं वासयन्ति ॥ १ ॥ तं चेदेतस्मिन्वयसि किंचि
पेत्स ब्रूयात्प्राणा वसव इदं मे प्रातःसवनं माध्य
सवनमनुसन्तनुतेति माहं प्राणानां वसूनां मध्ये

तस ोप्सीयेत्युद्धैव तत इत्यगदो ह भवति ॥ २ ॥ अथ
नाम ने चतुश्चत्वारिंशद्वर्षाणि तन्माध्यन्दिनꣳ सवनं चतु-
एतमे ारिꣳशदक्षरा त्रिष्टुप् त्रैष्टुभं माध्यन्दिनꣳ सवनं
सोऽहा स्य रुद्रा अन्वायत्ताः प्राणा वाव रुद्रा एते हीदꣳ
। २ ॥ ꣳ रोदयन्ति ॥ ३ ॥ तं चेदेतस्मिन्वयसि किंचिदुप-
येऽमुना स ब्रूयात्प्राणा रुद्रा इदं मे माध्यन्दिनꣳ सवनं
प्रपद्ये यसवनमनुसन्तनुतेति माहं प्राणानाꣳ रुद्राणां मध्ये
३ ॥ यो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवति ॥ ४ ॥
भूतं । यान्यष्टाचत्वारिꣳशद्वर्षाणि तृतीयसवनमष्टाचत्वा-
चं भूः शदक्षरा जगती जागतं तृतीयसवनं तदस्यादित्या
धि इत्ये अायत्ताः प्राणा वावादित्या एते हीदꣳसर्वमाददते
इत्यग्नि ॥ तं चेदेतस्मिन्वयसि किंचिदुपतपेत्स ब्रूयात्प्राणा
म् ॥ ६ दित्या इदं मे तृतीयसवनमायुरनुसन्तनुतेति माहं
यजुर्वेदं ानामादित्यानां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत
॥ ७ गदो हैव भवति ॥ ६ ॥ एतद्ध स्म वै तद्विद्वा-
ह महिदास ऐतरेयः स किं म एतदुपतपसि यो-
मनेन न प्रेष्यामीति स ह षोडशं वर्षशतमजीवत्प्रह
शति डशं वर्षशतं जीवति य एवं वेद ॥ ७ ॥ इति षोडशः
त्रं प्रात डः ॥ १६ ॥
एते
किंचि स यदशिशिषति यत्पिपासति यन्न रमते ता अस्य
माध्य क्षाः ॥ १ ॥ अथ यदश्नाति यत्पिबति यद्रमते तदु-
मध्ये दैरेति ॥ २ ॥ अथ यद्धसति यज्जक्षति यन्मैथुनं

चरति स्तुतशस्त्रैव तदेति ॥ ३ ॥ अथ यत्तपो दा
र्जवमहिंसा सत्यवचनमिति ता अस्य दक्षिणाः
तस्मादाहुः सोष्यत्यसोष्टेति पुनरुत्पादनमेवास्य त
मेवास्यावभृथः ॥ ५ ॥ तद्धैतद्घोर आङ्गिरसः कृ
देवकीपुत्रायोक्त्वोवाचापिपास एव स बभूव सो
वेलायामेतत्त्रयं प्रतिपद्येताक्षितमस्यच्युतमसि प्रा
शितमसीति तत्रैते द्वे ऋचौ भवतः ॥ ६ ॥ आदित्प्र
रेतसो ज्योतिष्पश्यन्ति वासरं । परो यदिध्यते दिवी
उद्वयन्तमसस्परि ज्योतिः पश्यन्त उत्तरꣳ स्वः प
उत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तममिति
रुत्तममिति ॥ ८ ॥ इति सप्तदशः खण्डः ॥ १७ ॥

मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाका
ह्मेत्युभयमादिष्टं भवत्यध्यात्मं चाधिदैवतं च ॥
तदेतच्चतुष्पाद्ब्रह्म वाक् पादः प्राणः पादश्चक्षुः
श्रोत्रं पाद इत्यध्यात्ममथाधिदैवतमग्निः पादो वायु
आदित्यः पादो दिशः पाद इत्युभयमेवादिष्टं भवत्य
चैवाधिदैवतं च ॥ २ ॥ वागेव ब्रह्मणश्चतुर्थः
सोऽग्निना ज्योतिषा भाति च तपति च भा
तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य ए
॥ ३ ॥ प्राण एव ब्रह्मणश्चतुर्थः पादः स
ज्योतिषा भाति च तपति च भाति च तप
कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥

द यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष
आत्मान्तर्याम्यमृतः ॥ ९ ॥ यो दिक्षु तिष्ठन्दिग्भ्यो-
रो यं दिशो न विदुर्यस्य दिशः शरीरं यो दिशो-
रो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ १० ॥ यश्च-
रके तिष्ठंश्चन्द्रतारकादन्तरो यं चन्द्रतारकं न वेद
चन्द्रतारकं शरीरं यश्चन्द्रतारकमन्तरो यमयत्येष
आत्मान्तर्याम्यमृतः ॥ ११ ॥ य आकाशे तिष्ठन्नाकाशा-
रो यमाकाशो न वेद यस्याकाशः शरीरं य आका-
न्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ १२ ॥
मसि तिष्ठंस्तमसोऽन्तरो यं तमो न वेद यस्य तमः
रं यस्तमोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः
३ ॥ यस्तेजसि तिष्ठंस्तेजसोऽन्तरो यं तेजो न वेद
तेजः शरीरं यस्तेजोऽन्तरो यमयत्येष त आत्मान्तर्या-
इत्यधिदैवतमथाधिभूतम् ॥ १४ ॥ यः सर्वेषु
तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरो यं सर्वाणि
नि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि
न्यन्तरो यमयत्येष त आत्मान्तर्याम्यमृत इत्यधिभू-
अध्यात्मम् ॥ १५ ॥ यः प्राणे तिष्ठन् प्राणादन्तरो
णो न वेद यस्य प्राणः शरीरं यः प्राणमन्तरो यम-
त आत्मान्तर्याम्यमृतः ॥ १६ ॥ यो वाचि तिष्ठ-
ऽन्तरो यं वाङ् न वेद यस्य वाक् शरीरं यो वाच-
यमयत्येष त आत्मान्तर्याम्यमृतः ॥ १७ ॥ यश्च-

क्षुषि तिष्ठꣳश्चक्षुषोऽन्तरो यं चक्षुर्न वेद यस्य चक्षुः
यश्चक्षुरन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥
यः श्रोत्रे तिष्ठञ्छ्रोत्रादन्तरो यꣳ श्रोत्रं न वेद
श्रोत्रꣳ शरीरं यः श्रोत्रमन्तरो यमयत्येष त आत्मा
म्यमृतः ॥ १९ ॥ यो मनसि तिष्ठन्मनसोऽन्तरो यं
न वेद यस्य मनः शरीरं यो मनोऽन्तरो यमयत्
आत्मान्तर्याम्यमृतः ॥ २० ॥ यस्त्वचि तिष्ठꣳ
ऽन्तरो यं त्वङ् न वेद यस्य त्वक् शरीरं यस्त्वच
यमयत्येष त आत्मान्तर्याम्यमृतः ॥ २१ ॥ यो
तिष्ठन्विज्ञानादन्तरो यं विज्ञानं न वेद यस्य वि
शरीरं यो विज्ञानमन्तरो यमयत्येष त आत्मान्त
मृतः ॥ २२ ॥ यो रेतसि तिष्ठन् रेतसोऽन्तरो यं
न वेद यस्य रेतः शरीरं यो रेतोऽन्तरो यमयत्
आत्मान्तर्याम्यमृतोऽदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो
ऽविज्ञातो विज्ञाता नान्योऽतोऽस्ति द्रष्टा नान्योऽ
श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञा
आत्मान्तर्याम्यमृतोऽतोऽन्यदार्तं ततो होद्दालक
रुपरराम ॥ २३ ॥ इति सप्तमं ब्राह्मणम् ॥ ७ ॥

अथ ह वाचक्नव्युवाच ब्राह्मणा भगवन्तो हन्त
द्वौ प्रश्नौ प्रक्ष्यामि तौ चेन्मे वक्ष्यति न वै जातु
कश्चिमं कश्चिद्ब्रह्मोद्यं जेतेति पृच्छ गार्गीति ॥ १
होवाचाहं वै त्वा याज्ञवल्क्य यथा काश्यो वा

पुत्र उज्ज्यं धनुरधिज्यं कृत्वा द्वौ बाणवन्तौ सपत्ना-
ाधिनौ हस्ते कृत्वोपोत्तिष्ठेदेवमेवाहं त्वा द्वाभ्यां
भ्यामुपोदस्थां तौ मे ब्रूहीति पृच्छ गार्गीति ॥ २ ॥
होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक् पृथिव्या
तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चे-
क्षते कस्मिंस्तदोतं च प्रोतं चेति ॥३॥ स होवाच
वं गार्गि दिवो यदवाक् पृथिव्या यदन्तरा द्यावा-
वी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाशे
तं च प्रोतं चेति ॥ ४ ॥ सा होवाच नमस्तेऽस्तु
वल्क्य यो म एतं व्यवोचोऽपरस्मै धारयस्वेति पृच्छ
ीति ॥ ५ ॥ सा होवाच यदूर्ध्वं याज्ञवल्क्य दिवो
ाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च
भविष्यच्चेत्याचक्षते कस्मिंस्तदोतं च प्रोतं चेति
स होवाच यदूर्ध्वं गार्गि दिवो यदवाक् पृथिव्या
तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चे-
क्षत आकाश एव तदोतं च प्रोतं चेति कस्मिन्नु
काश ओतश्च प्रोतश्चेति ॥ ७ ॥ स होवाचैतद्वै
रं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदी-
लोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमर-
न्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममु-
ात्रमनन्तरबाह्यं न तदश्नाति किंचन न तदश्नाति
॥ ८ ॥ एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्या-

चन्द्रमसौ विधृतौ तिष्ठत एतस्य वा अक्षरस्य प्र
गार्गि-द्यावापृथिव्यौ विधृते तिष्ठत एतस्य वा अ
प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राण्य
मासा ऋतवः संवत्सरा इति विधृतास्तिष्ठन्त्येत
अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्
श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्या यां यां च दि
तस्य वा अक्षरस्य प्रशासने गार्गि ददतो म
प्रशꣳसन्ति यजमानं देवा दर्वीं पितरोऽन्वायत्ताः
यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति
तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भ
वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात्प्रैति स कृपणः
एतदक्षरं गार्गि विदित्वास्माल्लोकात्प्रैति स ब्राह्मणः
तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतꣳ श्रोत्रमतं मन्त्
विज्ञातृ नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ
दतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञात्रेतस्मिन्नु ख
गार्ग्याकाश ओतश्च प्रोतश्चेति ॥११॥ सा होवाच
भगवन्तस्तदेव बहुमन्येध्वं यदस्मान्नमस्कारेण मु
वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति ततो ह
क्नव्युपरराम ॥ १२ ॥ इत्यष्टमं ब्राह्मणम् ॥ ८ ॥

अथ हैनं विदग्धः शाकल्यः पप्रच्छ कति देवा
वल्क्येति स हैतयैव निविदा प्रतिपेदे यावन्तो वै

द्युच्यन्ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रयस्त्रिँशदित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति षडित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रय इत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति द्वावित्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्यध्यर्ध इत्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्येक इत्योमिति होवाच कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति ॥ १ ॥ स होवाच महिमान एवैषामेते त्रयस्त्रिँशत्त्वेव देवा इति कतमे ते त्रयस्त्रिँशदित्यष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रिँशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिँशाविति ॥ २ ॥ कतमे वसव इत्यग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसव एतेषु हीदँ वसु सर्वँ हितमिति तस्माद्वसव इति ॥ ३ ॥ कतमे रुद्रा इति दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदास्माच्छरीरान्मर्त्यादुत्क्रामन्त्यथ रोदयन्ति तद्यद्रोदयन्ति तस्माद्रुद्रा इति ॥ ४ ॥ कतम आदित्या इति द्वादश वै मासाः संवत्सरस्यैत आदित्या एते हीदँ सर्वमाददाना यन्ति ते यदिदँ सर्वमाददाना यन्ति तस्मादादित्या इति ॥ ५ ॥ कतम इन्द्रः कतमः प्रजापतिरिति स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिरिति कतमः स्तनयित्नुरित्यशनिरिति कतमो यज्ञ इति पशव इति ॥ ६ ॥ कतमे षडि-

त्यग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च
षडेते हीदꣳ सर्वꣳ षडिति ॥ ७ ॥ कतमे ते त्रयो
इतीम एव त्रयो लोका एषु हीमे सर्वे देवा इति
तौ द्वौ देवावित्यन्नं चैव प्राणश्चेति कतमोऽध्यर्ध इति
पवत इति ॥ ८ ॥ तदाहुर्यदयमेक इवैव प
कथमध्यर्ध इति यदस्मिन्निदꣳ सर्वमध्यार्ध्नोत्तेन
इति कतम एको देव इति प्राण इति स ब्रह्म
त्याचक्षते ॥ ९ ॥ पृथिव्येव यस्यायतनमग्नि
मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः पर
स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं
सर्वस्यात्मनः परायणं यमात्थ य एवायꣳ शारीरः
स एष वदैव शाकल्य तस्य का देवतेत्यमृतमिति
॥ १० ॥ काम एव यस्यायतनꣳ हृदयं लोको
ज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायण
वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ स
त्मनः परायणं यमात्थ य एवायं काममयः
स [illegible] वदैव शाकल्य तस्य का देवतेति स्त्रिय
होवाच ॥ ११ ॥ रूपाण्येव यस्यायतनं चक्षुर्लोको
ज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायण
वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुष
स्यात्मनः परायणं यमात्थ य एवासावादित्ये पुरु
एष वदैव शाकल्य तस्य का देवतेति सत्यमिति

१२ ॥ आकाश एव यस्यायतनꣳ श्रोत्रं लोको मनो
ज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स
वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्व-
स्यात्मनः परायणं यमात्थ य एवायꣳ श्रौत्रः प्रातिश्रुत्कः
पुरुषः स एष वदैव शाकल्य तस्य का देवतेति दिश इति
होवाच ॥ १३ ॥ तम एव यस्यायतनꣳ हृदयं लोको
मनो ज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ
स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ
सर्वस्यात्मनः परायणं यमात्थ य एवायं छायामयः पुरुषः
स एष वदैव शाकल्य तस्य का देवतेति मृत्युरिति
होवाच ॥ १४ ॥ रूपाण्येव यस्यायतनं चक्षुर्लोको मनो
ज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै
वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्या-
त्मनः परायणं यमात्थ य एवायमादर्शे पुरुषः स एष
वदैव शाकल्य तस्य का देवतेत्यसुरिति होवाच ॥ १५ ॥
आप एव यस्यायतनꣳ हृदयं लोको मनो ज्योतिर्यो वै
तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता
स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः
परायणं यमात्थ य एवायमप्सु पुरुषः स एष वदैव
शाकल्य तस्य का देवतेति वरुण इति होवाच ॥ १६ ॥
स्त्रिय एव यस्यायतनꣳ हृदयं लोको मनो ज्योतिर्यो वै तं
पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्या-

ज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः पर
यमात्थ य एवायं पुत्रमयः पुरुषः स एष वदैव शा
तस्य का देवतेति प्रजापतिरिति होवाच ॥ १७ ॥
ल्येति होवाच याज्ञवल्क्यस्त्वाꣳ स्विदिमे ब्रा
अङ्गारावक्षयणमक्रता ३ इति ॥ १८ ॥ याज्ञवल्
होवाच शाकल्यो यदिदं कुरुपञ्चालानां ब्राह्मणानत्य
किं ब्रह्म विद्वानिति दिशो वेद सदेवाः सप्रतिष्ठा
यद्दिशो वेत्थ सदेवाः सप्रतिष्ठाः ॥ १९ ॥ किंदेवतो
प्राच्यां दिश्यसीत्यादित्यदेवत इति स आदित्यः क
प्रतिष्ठित इति चक्षुषीति कस्मिन्नु चक्षुः प्रतिष्ठित
रूपेष्विति चक्षुषा हि रूपाणि पश्यति कस्मिन्नु रू
प्रतिष्ठितानीति हृदय इति होवाच हृदयेन हि रू
जानाति हृदये ह्येव रूपाणि प्रतिष्ठितानि भवन्तीत्ये
वैतद्याज्ञवल्क्य ॥ २० ॥ किंदेवतोऽस्यां दक्षि
दिश्यसीति यमदेवत इति स यमः कस्मिन्प्रति
इति यज्ञ इति कस्मिन्नु यज्ञः प्रतिष्ठित इति दक्षिण
मिति कस्मिन्नु दक्षिणा प्रतिष्ठितेति श्रद्धायामिति
ह्येव श्रद्धत्तेऽथ दक्षिणां ददाति श्रद्धायाꣳ
दक्षिणा प्रतिष्ठितेति कस्मिन्नु श्रद्धा प्रतिष्
हृदय इति होवाच हृदयेन हि श्रद्धां जा
हृदये ह्येव श्रद्धा प्रतिष्ठिता भवतीत्येवमेवैतद्याज्ञव
॥ २१ ॥ किंदेवतोऽस्यां प्रतीच्यां दिश्यसीति वरुण

इति स वरुणः कस्मिन्प्रतिष्ठित इत्यप्स्विति कस्मिन्न्वापः प्रतिष्ठिता इति रेतसीति कस्मिन्नु रेतः प्रतिष्ठितमिति हृदय इति तस्मादपि प्रतिरूपं जातमाहुर्हृदयादिव सृप्तो हृदयादिव निर्मित इति हृदये ह्येव रेतः प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य ॥ २२ ॥ किंदेवतोऽस्यामुदीच्यां दिश्यसीति सोमदेवत इति स सोमः कस्मिन्प्रतिष्ठित इति दीक्षायामिति कस्मिन्नु दीक्षा प्रतिष्ठितेति सत्य इति तस्मादपि दीक्षितमाहुः सत्यं वदेति सत्ये ह्येव दीक्षा प्रतिष्ठितेति कस्मिन्नु सत्यं प्रतिष्ठितमिति हृदय इति होवाच हृदयेन हि सत्यं जानाति हृदये ह्येव सत्यं प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य ॥ २३ ॥ किंदेवतोऽस्यां ध्रुवायां दिश्यसीत्यग्निदेवत इति सोऽग्निः कस्मिन्प्रतिष्ठित इति वाचीति कस्मिन्नु वाक् प्रतिष्ठितेति हृदय इति कस्मिन्नु हृदयं प्रतिष्ठितमिति ॥ २४ ॥ अहल्लिकेति होवाच याज्ञवल्क्यो यत्रैतदन्यत्रास्मन्मन्यासै यद्ध्येतदन्यत्रास्मत्स्याच्छ्वानो वैनदद्युर्वयाꣳसि वैनद्विमथ्नीरन्निति ॥ २५ ॥ कस्मिन्नु त्वं चात्मा च प्रतिष्ठितौ स्थ इति प्राण इति कस्मिन्नु प्राणः प्रतिष्ठित इत्यपान इति कस्मिन्न्वपानः प्रतिष्ठित इति व्यान इति कस्मिन्नु व्यानः प्रतिष्ठित इत्युदान इति कस्मिन्नूदानः प्रतिष्ठित इति समान इति स एष नेतिनेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्यो नहि शीर्यतेऽसङ्गो नहि सज्यतेऽसितो न व्यथते

न रिष्यत्येतान्यष्टावायतनान्यष्टौ लोका अष्टौ देवा अ
पुरुषाः स यस्तान्पुरुषान्निरुह्य प्रत्युह्यात्यक्रामत्तं त्वौपनि
दं पुरुषं पृच्छामि तं चेन्मे न विवक्ष्यसि मूर्धा ते विप
ष्यतीति तꣳ ह न मेने शाकल्यस्तस्य ह मूर्धा विप
तापि हास्य परिमोषिणोऽस्थीन्यपजह्रुरन्यन्मन्यमा
॥ २६ ॥ अथ होवाच ब्राह्मणा भगवन्तो यो वः का
यते स मा पृच्छतु सर्वे वा मा पृच्छत यो वः काम
तं वः पृच्छामि सर्वान्वा वः पृच्छामीति ते ह ब्राह्म
न दधृषुः ॥ २७ ॥ तान् हैतैः श्लोकैः पप्रच्छ ॥ य
वृक्षो वनस्पतिस्तथैव पुरुषोऽमृषा ॥ तस्य लोमा
पर्णानि त्वगस्योत्पाटिका बहिः ॥ त्वच एवास्य रुधिरं प्र
न्दित्वच उत्पटः ॥ तस्मात्तदा तृण्णात्प्रैति रसो वृक्षादि
हतात् ॥ माꣳसान्यस्य शकराणि किनाटꣳ स्नाव तत्
रम् ॥ अस्थीन्यन्तरतो दारूणि मज्जा मज्जोपमा कृता
यद्वृक्षो वृक्णो रोहति मूलान्नवतरः पुनः ॥ मर्त्यः स्वि
त्युना वृक्णः कस्मान्मूलात्प्ररोहति ॥ रेतस इति मा
चत जीवतस्तत्प्रजायते ॥ धानारुह इव वै वृक्षोऽञ्
प्रेत्यसंभवः ॥ यत्समूलमावृहेर्वृक्षं न पुनराभवेत् ॥ म
स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति ॥ जात एव
जायते कोन्वेनं जनयेत्पुनः ॥ विज्ञानमानन्दं ब्रह्म रा
र्दातुः परायणं तिष्ठमानस्य तद्विद इति॥२८॥ इति नव
ब्राह्मणम् ॥ ९ ॥ इति तृतीयोऽध्यायः ॥ ३ ॥

# चतुर्थोऽध्यायः ॥ ४ ॥

जनको ह वैदेह आसांचक्रेऽथ ह याज्ञवल्क्य आवव्राज तꣳ होवाच याज्ञवल्क्य किमर्थमचारीः पशूनिच्छन्नण्वन्तानीत्युभयमेव सम्राडिति होवाच ॥ १ ॥ यत्ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे जित्वा शैलिनिर्वाग्वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तच्छैलिनिरब्रवीद्वाग्वै ब्रह्मेत्यवदतो हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य। वागेवायतनमाकाशः प्रतिष्ठा प्रज्ञेत्येनदुपासीत का प्रज्ञता याज्ञवल्क्य वागेव सम्राडिति होवाच वाचा वै सम्राड्बन्धुः प्रज्ञायत ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानीष्टꣳहुतमाशितं पायितमयं च लोकः परश्च लोकः सर्वाणि च भूतानि वाचैव सम्राट् प्रज्ञायन्ते वाग्वै सम्राट् परमं ब्रह्म नैनं वाग्जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ २ ॥ यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्म उदङ्कः शौल्बायनः प्राणो वै ब्रह्मेति यथा मातृमान्पितृ-

अनाचार्यवान्ब्रूयात्तथा तच्छौल्बायनोऽब्रवीत्प्राणो
ब्रह्मेत्यप्राणतो हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनं
प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो
ब्रूहि याज्ञवल्क्य प्राण एवायतनमाकाशः प्रतिष्ठा प्रिय-
मित्येनदुपासीत का प्रियता याज्ञवल्क्य प्राण एव सम्रा-
डिति होवाच प्राणस्य वै सम्राट् कामायायाज्यं याजय-
त्यप्रतिगृह्यस्य प्रतिगृह्णात्यपि तत्र वधाशङ्कं भवति
यां दिशमेति प्राणस्यैव सम्राट् कामाय प्राणो वै
सम्राट् परमं ब्रह्म नैनं प्राणो जहाति सर्वाण्येनं
भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं
विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रं ददामीति होवाच
जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत
नाननुशिष्य हरेतेति ॥ ३ ॥ यदेव ते कश्चिदब्रवीत्तच्छृ-
णवामेत्यब्रवीन्मे वर्कुर्वार्ष्णश्चक्षुर्वै ब्रह्मेति यथा मातृमा-
न्पितृमानाचार्यवान्ब्रूयात्तथा तद्वार्ष्णोऽब्रवीच्चक्षुर्वै ब्रह्मेत्यप-
श्यतो हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां
न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि
याज्ञवल्क्य चक्षुरेवायतनमाकाशः प्रतिष्ठा सत्यमित्येनदु-
पासीत का सत्यता याज्ञवल्क्य चक्षुरेव सम्राडिति होवाच
चक्षुषा वै सम्राट् पश्यन्तमाहुरद्राक्षीरिति स आहाद्रा-
क्षमिति तत्सत्यं भवति चक्षुर्वै सम्राट् परमं ब्रह्म नैनं
चक्षुर्जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भू

नप्येति य एवंविद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रं
मीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः
मेऽमन्यत नाननुशिष्य हरेतेति ॥ ४ ॥ यदेव ते
दब्रवीत्तच्छृणवामेत्यब्रवीन्मे गर्दभी विपीतो भार-
: श्रोत्रं वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवा-
यात्तथा तद्भारद्वाजोऽब्रवीच्छ्रोत्रं वै ब्रह्मेत्यशृण्वतो हि
स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवी-
कपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य
त्रमेवायतनमाकाशः प्रतिष्ठानन्त इत्येनदुपासीत का-
नता याज्ञवल्क्य दिश एव सम्राडिति होवाच तस्माद्वै
ाडपि यां कां च दिशं गच्छति नैवास्या अन्तं
च्छत्यनन्ता हि दिशो दिशो वै सम्राट् श्रोत्रꣳ
त्रं वै सम्राट् परमं ब्रह्म नैनꣳ श्रोत्रं जहाति सर्वा-
नं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य
विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रं ददामीति
वाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता
मन्यत नाननुशिष्य हरेतेति ॥ ५ ॥ यदेव ते
दब्रवीत्तच्छृणवामेत्यब्रवीन्मे सत्यकामो जाबालो
नो वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूया-
त्तथा तज्जाबालोऽब्रवीन्मनो वै ब्रह्मेत्यमनसो हि किꣳ
दित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठा न मेऽब्रवीदित्ये-
पाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य मन

एवायतनमाकाशः प्रतिष्ठाऽऽनन्द इत्येनदुपासीत
आनन्दता याज्ञवल्क्य मन एव सम्राडिति हो
मनसा वै सम्राट् स्त्रियमभिहार्यते तस्यां प्रतिरूपः
जायते स आनन्दो मनो वै सम्राट् परमं ब्रह्म नैनं
जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा
नप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रं
मीति होवाच जनको वैदेहः स होवाच याज्ञव
पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ६ ॥ यदे
कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे विदग्धः शाक
हृदयं वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूया
तच्छाकल्योऽब्रवीद्धृदयं वै ब्रह्मेत्यहृदयस्य हि
स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवी
कपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य
मेवायतनमाकाशः प्रतिष्ठा स्थितिरित्येनदुपासीत
स्थितता याज्ञवल्क्य हृदयमेव सम्राडिति होवाच
वै सम्राट् सर्वेषां भूतानामायतनꣳ हृदयं वै
सर्वेषां भूतानां प्रतिष्ठा हृदये ह्येव सम्राट् स
भूतानि प्रतिष्ठितानि भवन्ति हृदयं वै सम्राट् परमं
नैनꣳ हृदयं जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति
भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृ
सहस्रं ददामीति होवाच जनको वैदेहः स हो
याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरे

॥ इति बृहदारण्यके चतुर्थे प्रथमं ब्राह्मणम् ॥ १ ॥

जनको ह वैदेहः कूर्चादुपावसर्पन्नुवाच नमस्तेऽस्तु याज्ञवल्क्यानु माशाधीति स होवाच यथा वै सम्राण्महान्तमध्वानमेष्यन् रथं वा नावं वा समाददीतैवमेवैताभिरुपनिषद्भिः समाहितात्मास्येवं वृन्दारक आढ्यः सन्नधीतवेद उक्तोपनिषत्क इतो विमुच्यमानः क्व गमिष्यसीति नाहं तद्भगवन्वेद यत्र गमिष्यामीत्यथ वै तेऽहं तद्वक्ष्यामि यत्र गमिष्यसीति ब्रवीतु भगवानिति ॥ १ ॥ इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन्पुरुषस्तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेणैव परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः ॥ २ ॥ अथैतद्वामेऽक्षणि पुरुषरूपमेषास्य पत्नी विराट् तयोरेष संस्तावो य एषोऽन्तर्हृदय आकाशोऽथैनयोरेतदन्नं य एषोऽन्तर्हृदये लोहितपिण्डोऽथैनयोरेतत्प्रावरणं यदेतदन्तर्हृदये जालकमिवाथैनयोरेषा सृतिः संचरणी यैषा हृदयादूर्ध्वा नाड्युच्चरति यथा केशः सहस्रधा भिन्न एवमस्यैता हिता नाम नाड्योऽन्तर्हृदये प्रतिष्ठिता भवन्त्येव ताभिर्वा एतदास्रवदास्रवति तस्मादेष प्रविविक्ताहारतर इवैव भवत्यस्माच्छारीरादात्मनः ॥ ३ ॥ तस्य प्राची दिक् प्राञ्चः प्राणा दक्षिणा दिग्दक्षिणे प्राणाः प्रतीची दिक् प्रत्यञ्चः प्राणा उदीची दिगुदञ्चः प्राणा ऊर्ध्वा दिगूर्ध्वाः प्राणा अवाची दिगवाञ्चः प्राणाः सर्वा दिशः सर्वे प्राणाः स एष नेति

नेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्यो नहि शीर्यतेऽसङ्गो
हि सज्यतेऽसितो न व्यथते न रिष्यत्यभयं वै
प्राप्तोसीति होवाच याज्ञवल्क्यः स होवाच जनको
होऽभयं त्वागच्छताद्याज्ञवल्क्य यो नो भगवन्नभयं
यसे नमस्तेऽस्त्विमे विदेहा अयमहमस्मि ॥ ४ ॥
चतुर्थे द्वितीयं ब्राह्मणम् ॥ २ ॥

जनकꣳ ह वैदेहं याज्ञवल्क्यो जगाम स मेने
वदिष्य इत्यथ ह यज्जनकश्च वैदेहो याज्ञवल्क्यश्चाग्नि
समूदाते तस्मै ह याज्ञवल्क्यो वरं ददौ स ह कामप्र
वव्रे तꣳहास्मै ददौ तꣳ सम्राडेव पूर्वं पप्रच्छ ॥
याज्ञवल्क्य किंज्योतिरयं पुरुष इति आदित्यज्
सम्राडिति होवाचादित्येनैवायं ज्योतिषास्ते पल्ययते
कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥२॥ अस्तमित
दित्ये याज्ञवल्क्य किंज्योतिरेवायं पुरुष इति चन्द्रमा
स्य ज्योतिर्भवतीति चन्द्रमसैवायं ज्योतिषास्ते प
कर्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥३॥ अ
आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते किंज्योति
पुरुष इत्यग्निरेवास्य ज्योतिर्भवतीत्यग्निनैवायं ज्योति
पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य
अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते
ऽग्नौ किंज्योतिरेवायं पुरुष इति वागेवास्य ज्योति
तीति वाचैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते

तीति तस्माद्वै सम्राडपि यत्र स्वः पाणिर्न विनिर्ज्ञा-
यतेऽथ यत्र वागुच्चारयत्युपैव तत्र न्येतीत्येवमेवैतद्याज्ञ-
वल्क्य ॥ ५ ॥ अस्तमित आदित्ये याज्ञवल्क्य चन्द्रम-
स्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किंज्योतिरेवायं
पुरुष इत्यात्मैवास्य ज्योतिर्भवतीत्यात्मनैवायं ज्योति-
षास्ते पल्ययते कर्म कुरुते विपल्येतीति ॥ ६ ॥ कतम
आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः
पुरुषः स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव
लेलायतीव स हि स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो
रूपाणि ॥ ७ ॥ स वा अयं पुरुषो जायमानः शरीरमभि-
संपद्यमानः पाप्मभिः सꣳसृज्यते स उत्क्रामन् म्रिय-
माणः पाप्मनो विजहाति ॥ ८ ॥ तस्य वा एतस्य
पुरुषस्य द्वे एव स्थाने भवत इदं च परलोकस्थानं च
संध्यं तृतीयꣳ स्वप्नस्थानं तस्मिन्संध्ये स्थाने तिष्ठन्नेते
उभे स्थाने पश्यतीदं च परलोकस्थानं च अथ यथाक्रमो-
ऽयं परलोकस्थाने भवति तमाक्रममाक्रम्योभयान्पाप्मन
आनन्दाꣳश्च पश्यति स यत्र प्रस्वपित्यस्य लोकस्य
सर्वावतो मात्रामुपादाय स्वयं विहत्य स्वयं निर्माय
स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयं-
ज्योतिर्भवति ॥ ९ ॥ न तत्र रथा न रथयोगा न पन्थानो
भवन्त्यथ रथान्रथयोगान्पथः सृजते न तत्रानन्दा
मुदः प्रमुदो भवन्त्यथानन्दान् मुदः प्रमुदः सृजते

न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भव
वेशान्तान् पुष्करिणीः स्रवन्तीः सृजते स हि
॥ १० ॥ तदेते श्लोका भवन्ति ॥ स्वप्नेन शारीर
प्रहत्यासुप्तः सुप्तानभिचाकशीति । शुक्रमादाय पु
स्थानꣳ हिरण्मयः पुरुष एकहꣳसः ॥ ११ ॥ प्र
रक्षन्नवरं कुलायं बहिष्कुलायादमृतश्चरित्वा । स
ऽमृतो यत्र कामꣳ हिरण्मयः पुरुष एकहꣳसः ॥
स्वप्नान्त उच्चावचमीयमानो रूपाणि देवः कुरुते बहू
उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भ
पश्यन् ॥ १३ ॥ आराममस्य पश्यन्ति न तं प
कश्चनेति तं नायतं बोधयेदित्याहुः ॥ दुर्भिषज्यꣳ
भवति यमेष न प्रतिपद्यतेऽथो खल्वाहुर्जागरि
एवास्यैष इति यानि ह्येव जाग्रत्पश्यति तानि सुप्त
त्रायं पुरुषः स्वयंज्योतिर्भवति सोऽहं भगवते
ददाम्यत ऊर्ध्वं विमोक्षाय ब्रूहीति ॥ १४ ॥ स वा
एतस्मिन्संप्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पा
पुनः प्रतिन्यायं प्रतियोन्याद्रवति स्वप्नायैव स
किंचित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष
वमेवैतद्याज्ञवल्क्य सोऽहं भगवते सहस्रं दद
ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥ १५ ॥ स वा एष एत
न्स्वप्ने रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्र
त्यायं प्रतियोन्याद्रवति बुद्धान्तायैव स यत्तत्र कि

प्रत्ययनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इत्येवमेवै-
तद्याज्ञवल्क्य सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं
विमोक्षायैव ब्रूहीति ॥ १६ ॥ स वा एष एतस्मिन्बुद्धा-
न्ते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः
प्रतिन्यायं प्रतियोन्याद्रवति स्वप्नान्तायैव ॥ १७ ॥
तद्यथा महामत्स्य उभे कूलेऽनुसंचरति पूर्वं चापरं चैवमे-
वायं पुरुष एतावुभावन्तावनुसंचरति स्वप्नान्तं च बुद्धान्तं
च ॥ १८ ॥ तद्यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा
विपरिपत्य श्रान्तः सꣳहत्य पक्षौ संलयायैव ध्रियत
एवमेवायं पुरुष एतस्मा अन्ताय धावति यत्र सुप्तो
न कंचन कामं कामयते न कंचन स्वप्नं पश्यति
॥ १९ ॥ ता वा अस्यैता हिता नाम नाड्यो यथा
केशः सहस्रधा भिन्नस्तावताणिम्ना तिष्ठन्ति शुक्लस्य
नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा अथ यत्रैनं
घ्नन्तीव जिनन्तीव हस्तीव विच्छाययति गर्तमिव पतति
यदेव जाग्रद्भयं पश्यति तदत्राविद्यया मन्यतेऽथ यत्र
देव इव राजेवाहमेवेदꣳ सर्वोऽस्मीति मन्यते सोऽस्य
परमो लोकः ॥ २० ॥ तद्वा अस्यैतदतिच्छन्दा अपहत-
पाप्माऽभयꣳ रूपं तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न
बाह्यं किंचन वेद नान्तरमेवमेवायं पुरुषः प्राज्ञेनात्मना
संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरं तद्वा अस्यैतदाप्त-
काममात्मकाममकामꣳ रूपꣳ शोकान्तरम् ॥ २१ ॥

अत्र पिताऽपिता भवति माताऽमाता लोका अ
देवा अदेवा वेदा अवेदा अत्र स्तेनोऽस्तेनो भवति भ्रू
ऽभ्रूणहा चाण्डालोऽचाण्डालः पौल्कसोऽपौल्कसः श्र
ऽश्रमणस्तापसोऽतापसोनन्वागतं पुण्येनानन्वागतं प
तीर्णो हि तदा सर्वाञ्छोकान्हृदयस्य भवति ॥ २२ ॥
तन्न पश्यति पश्यन्वै तन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरि
विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्वि
यत्पश्येत् ॥ २३ ॥ यद्वै तन्न जिघ्रति जिघ्रन्वै
जिघ्रति न हि घ्रातुर्घ्रातेर्विपरिलोपो विद्यतेऽविनाशि
तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यज्जिघ्रेत् ॥ २४
यद्वै तन्न रसयते रसयन्वै तन्न रसयते नहि रस
रसयतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्विती
स्ति ततोऽन्यद्विभक्तं यद्रसयेत् ॥ २५ ॥ यद्वै तन्न व
वदन्वै तन्न वदति न हि वक्तुर्वक्तेर्विपरिलोपो वि
ऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं य
॥ २६ ॥ यद्वै तन्न शृणोति शृण्वन्वै तन्न शृणोति
हि श्रोतुः श्रुतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु त
तीयमस्ति ततोऽन्यद्विभक्तं यच्छृणुयात् ॥ २७ ॥
तन्न मनुते मन्वानो वै तन्न मनुते न हि मन्तुर्मते
परिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति त
ऽन्यद्विभक्तं यन्मन्वीत ॥ २८ ॥ यद्वै तन्न स्पृ
स्पृशन्वै तन्न स्पृशति नहि स्प्रष्टुः स्पृष्टेर्विपरिलो

तेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्स्पृशेत् ॥ २९ ॥ यद्वै तन्न विजानाति विजानन्वै तन्न विजानाति न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात् ॥ ३० ॥ यत्र वान्यदिव स्यात्तत्रान्योऽन्यत्पश्येदन्योऽन्यज्जिघ्रेदन्योऽन्यद्रसयेदन्योऽन्यद्वदेदन्योऽन्यच्छृणुयादन्योऽन्यन्मन्वीतान्योऽन्यत्स्पृशेदन्योऽन्यद्विजानीयात् ॥ ३१ ॥ सलिल एको द्रष्टाऽद्वैतो भवत्येष ब्रह्मलोकः सम्राडिति हैनमनुशशास याज्ञवल्क्य एषास्य परमा गतिरेषास्य परमा संपदेषोऽस्य परमो लोक एषोऽस्य परम आनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति ॥ ३२ ॥ स यो मनुष्याणाꣳ राद्धः समृद्धो भवत्यन्येषामधिपतिः सर्वैर्मानुष्यकैर्भोगैः संपन्नतमः स मनुष्याणां परम आनन्दोऽथ ये शतं मनुष्याणामानन्दाः स एकः पितॄणां जितलोकानामानन्दोऽथ ये शतं पितॄणां जितलोकानामानन्दाः स एको गन्धर्वलोक आनन्दोऽथ ये शतं गन्धर्वलोक आनन्दाः स एकः कर्मदेवानामानन्दो ये कर्मणा देवत्वमभिसंपद्यन्तेऽथ ये शतं कर्मदेवानामानन्दाः स एक आजानदेवानामानन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ये शतमाजानदेवानामानन्दाः स एकः प्रजापतिलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ये शतं प्रजापतिलोक आनन्दाः स एको ब्रह्मलोक

आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथैष एव आनन्द एव ब्रह्मलोकः सम्राडिति होवाच याज्ञव सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षा ब्रूहीत्यत्र ह याज्ञवल्क्यो बिभयांचकार मेधावी सर्वेभ्यो मान्तेभ्य उदरौत्सीदिति ॥ ३३ ॥ स वा एतस्मिन्स्वप्नान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पा पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव ॥ ३ तद्यथाऽनः सुसमाहितमुत्सर्जद्यायादेवमेवायꣳ शा आत्मा प्राज्ञेनात्मनान्वारूढमुत्सर्जन्याति यत्रैतदूर्ध्वो सी भवति ॥ ३५ ॥ स यत्रायमणिमानं न्येति ज वोपतपता वाणिमानं निगच्छति तद्यथाम्रं वोदुम्बरं पिप्पलं वा बन्धनात्प्रमुच्यत एवमेवायं पुरुष ए ऽङ्गेभ्यः संप्रमुच्य पुनः प्रतिन्यायं प्रतियोन्याद्र प्राणायैव ॥३६॥ तद्यथा राजानमायान्तमुग्राः प्रत्येन सूतग्रामण्योऽन्नैः पानैरावसथैः प्रतिकल्पन्तेऽयमायात यमागच्छतीत्येवꣳ हैवंविदꣳ सर्वाणि भूतानि प्रति ल्पन्त इदं ब्रह्मायातीदमागच्छतीति ॥ ३७ ॥ तद राजानं प्रयियासन्तमुग्राः प्रत्येनसः सूतग्रामण्योऽभि मायन्त्येवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिस यन्ति यत्रैतदूर्ध्वोच्छ्वासी भवति ॥ ३८ ॥ इति तृ ब्राह्मणम् ॥ ३ ॥

स यत्रायमात्माऽबल्यं न्येत्यसंमोहमिव न्येत्यथैनमे

णा अभिसमायन्ति स एतास्तेजोमात्राः समभ्याद-
दानो हृदयमेवान्ववक्रामति स यत्रैष चाक्षुषः पुरुषः
पराङ् पर्यावर्ततेऽथारूपज्ञो भवति ॥ १ ॥ एकीभवति
न पश्यतीत्याहुरेकीभवति न जिघ्रतीत्याहुरेकीभवति न
रसयत इत्याहुरेकीभवति न वदतीत्याहुरेकीभवति न
शृणोतीत्याहुरेकीभवति न मनुत इत्याहुरेकीभवति न
स्पृशतीत्याहुरेकीभवति न विजानातीत्याहुस्तस्य हैतस्य
हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति
चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्राम-
न्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तꣳ सर्वे प्राणा
अनूत्क्रामन्ति स विज्ञानो भवति स विज्ञातमेवान्व-
वक्रामति तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च ॥२॥
तद्यथा तृणजलायुका तृणस्यान्तं गत्वाऽन्यमाक्रममाक्र-
म्यात्मानमुपसꣳहरत्येवमेवायमात्मेदꣳ शरीरं निहत्या-
ऽविद्यां गमयित्वाऽन्यमाक्रममाक्रम्यात्मानमुपसꣳहरति
॥ ३ ॥ तद्यथा पेशस्कारी पेशसो मात्रामुपादायान्यन्नव-
तरं कल्याणतरꣳ रूपं तनुत एवमेवायमात्मेदꣳ शरीरं
निहत्याऽविद्यां गमयित्वान्यन्नवतरं कल्याणतरꣳ रूपं
कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं
वाऽन्येषां वा भूतानाम् ॥४॥ स वा अयमात्मा ब्रह्म विज्ञा-
नमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः पृथिवी-
मय आपोमयो वायुमय आकाशमयस्तेजोमयोऽतेजोमयः

काममयोऽकाममयः क्रोधमयोऽक्रोधमयो धर्ममयो
मयः सर्वमयस्तद्यदेतदिदंमयोऽदोमय इति यथा
यथाचारी तथा भवति साधुकारी साधुर्भवति पाप
पापो भवति पुण्यः पुण्येन कर्मणा भवति पापः पा
अथो खल्वाहुः काममय एवायं पुरुष इति स यथा
भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते य
कुरुते तदभिसंपद्यते ॥५॥ तदेष श्लोको भवति ॥
सक्तः सह कर्मणेति लिङ्गं मनो यत्र निषक्तमस्य ॥ प्राप्
कर्मणस्तस्य यत्किंचेह करोत्ययम् ॥ तस्माल्लोकात्पुन
लोकाय कर्मण इति नु कामयमानोऽथाकामयमानो
ऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राण
त्क्रामन्ति ब्रह्मैव सन्ब्रह्माप्येति ॥६॥ तदेष श्लोको भव
यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ॥
मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इति ॥ तद्यथाऽहि
र्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदꣳ श
शेतेऽथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव स
भगवते सहस्रं ददामीति होवाच जनको वैदेहः ॥
तदेते श्लोका भवन्ति ॥ अणुः पन्था विततः पु
माꣳ स्पृष्टोऽनुवित्तो मयैव ॥ तेन धीरा अपियन्ति ब्र
विदः स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः ॥ ८ ॥ त
ञ्छुक्लमुत नीलमाहुः पिङ्गलꣳ हरितं लोहितं च ॥
पन्था ब्रह्मणा हानुवित्तस्तेनैति ब्रह्मवित्पुण्यकृत्तैजस

९ ॥ अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ॥ ततो
भूय इव ते तमो य उ विद्यायाꣳ रताः ॥१०॥ अनन्दा
नाम ते लोका अन्धेन तमसाऽवृताः ॥ ताꣳस्ते प्रेत्या-
भिगच्छन्त्यविद्वाꣳसोऽबुधो जनाः ॥ ११ ॥ आत्मानं
चेद्विजानीयादयमस्मीति पूरुषः । किमिच्छन्कस्य कामाय
शरीरमनुसंज्वरेत् ॥ १२ ॥ यस्यानुवित्तः प्रतिबुद्ध आ-
त्माऽस्मिन्संदेह्ये गहने प्रविष्टः ॥ स विश्वकृत्स हि
सर्वस्य कर्ता तस्य लोकाः स उ लोक एव ॥ १३ ॥ इहैव
सन्तोऽथ विद्मस्तद्वयं न चेदवेदीर्महती विनष्टिः ॥ ये
तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति ॥ १४ ॥
यदैतमनुपश्यत्यात्मानं देवमञ्जसा ॥ ईशानं भूतभव्यस्य
न ततो विजुगुप्सते ॥१५॥ यस्मादर्वाक्संवत्सरोऽहोभिः
परिवर्तते ॥ तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्
॥ १६ ॥ यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः ॥
तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम् ॥ १७ ॥
प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये
मनो विदुः ॥ ते निचिक्युर्ब्रह्म पुराणमग्र्यम् ॥ १८ ॥
मनसैवानुद्रष्टव्यं नेह नानास्ति किंचन ॥ मृत्योः स
मृत्युमाप्नोति य इह नानेव पश्यति ॥ १९ ॥ एकधैवानु-
द्रष्टव्यमेतदप्रमयं ध्रुवम् ॥ विरजः पर आकाशादज
आत्मा महान्ध्रुवः ॥ २० ॥ तमेव धीरो विज्ञाय प्रज्ञां
कुर्वीत ब्राह्मणः । नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनꣳ

हि तदिति ॥ २१ ॥ स वा एष महानज आत्मा योऽयं
विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते
सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साध्वा
कर्मणा भूयान्नो एवासाधुना कनीयानेष सर्वेश्वर
भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लो
नामसंभेदाय तमेतं वेदानुवचनेन ब्राह्मणा विविदि
यज्ञेन दानेन तपसाऽनाशकेनैतमेव विदित्वा मुनिर्भ
एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति एतद्ध
वैतत्पूर्वे विद्वाꣳसः प्रजां न कामयन्ते किं प्रजया
व्यामो येषां नोऽयमात्माऽयं लोक इति ते ह स्म
षणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय
भिक्षाचर्यं चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा
वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतः।
एष नेति नेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्यो नहि
तेऽसङ्गो नहि सज्ज्यतेऽसितो न व्यथते न रिष्यत्येत
वैते न तरत इत्यतः पापमकरवमित्यतः कल्याण
रवमित्युभे उ हैवैष एते तरति नैनं कृताकृते त
॥२२॥ तदेतदृचाभ्युक्तम्। एष नित्यो महिमा ब्राह्म
न वर्धते कर्मणा नो कनीयान्। तस्यैव स्यात्पदवित्तं
दित्वा न लिप्यते कर्मणा पापकेनेति तस्मादेवंविच्छान्त
दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽत्मन्येवात्मा
पश्यति सर्वमात्मानं पश्यति नैनं पाप्मा तरति स

पाप्मानं तरति नैनं पाप्मा तपति सर्वं पाप्मानं तपति
विपापो विरजो विचिकित्सो ब्राह्मणो भवत्येष ब्रह्मलोकः
सम्राडेनं प्रापितोऽसीति होवाच याज्ञवल्क्यः सोऽहं
भगवते विदेहान् ददामि मां चापि सह दास्यायेति ॥२३॥
स वा एष महानज आत्माऽन्नादो वसुदानो विन्दते वसु
य एवं वेद ॥२४॥ स वा एष महानज आत्माजरोऽमरो-
ऽमृतोऽभयो ब्रह्माभयं वै ब्रह्माभयꣳ हि वै ब्रह्म भवति य
एवं वेद ॥ २५ ॥ इति चतुर्थे चतुर्थं ब्राह्मणम् ॥ ४ ॥

अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च का-
त्यायनी च तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव स्त्रीप्रज्ञैव
तर्हि कात्यायन्यथ ह याज्ञवल्क्योऽन्यद्वृत्तमुपाकरिष्यन्
॥ १ ॥ मैत्रेयीति होवाच याज्ञवल्क्यः प्रव्रजिष्यन्वा
अरेऽयमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्यान्तं
करवाणीति ॥ २ ॥ सा होवाच मैत्रेयी यन्नु म इयं
भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्स्यां न्वहं तेनामृ-
ताऽऽहो३ नेति नेति होवाच याज्ञवल्क्यो यथैवोपकरण-
वतां जीवितं तथैव ते जीवितꣳ स्यादमृतत्वस्य तु ना-
शास्ति वित्तेनेति ॥ ३ ॥ सा होवाच मैत्रेयी येनाहं
नामृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव
मे विब्रूहीति ॥ ४ ॥ स होवाच याज्ञवल्क्यः प्रिया वै
खलु नो भवती सती प्रियमवृधद्धन्त तर्हि भवत्येतद्व्या-
ख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ॥५॥

स होवाच न वा अरे पत्युः कामाय पतिः प्रियो
त्यात्मनस्तु कामाय पतिः प्रियो भवति न वा
जायायै कामाय जाया प्रिया भवत्यात्मनस्तु का
जाया प्रिया भवति न वा अरे पुत्राणां का
पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रि
भवन्ति न वा अरे वित्तस्य कामाय वित्तं प्रियं भव
त्मनस्तु कामाय वित्तं प्रियं भवति न वा अरे पशू
कामाय पशवः प्रिया भवन्त्यात्मनस्तु कामाय पश
प्रिया भवन्ति न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भ
त्यात्मनस्तु कामाय ब्रह्म प्रियं भवति न वा अरे क्षत्र
कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं प्रि
भवति न वा अरे लोकानां कामाय लोकाः प्रि
भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति
वा अरे देवानां कामाय देवाः प्रिया भवन्त्यात्मन
कामाय देवाः प्रिया भवन्ति न वा अरे वेदानां का
वेदाः प्रिया भवन्त्यात्मनस्तु कामाय वेदाः प्रिया भव
न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्त्या
नस्तु कामाय भूतानि प्रियाणि भवन्ति न वा अरे सर्व
कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रि
भवति आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो नि
ध्यासितव्यो मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञा
इदꣳ सर्वं विदितम् ॥ ६ ॥ ब्रह्म तं परादाद्योऽन्यत्र

ब्रह्म वेद क्षत्रं तं परादाद्योऽन्यत्रात्मनः क्षत्रं वेद
लोकास्तं परादुर्योऽन्यत्रात्मनो लोकान्वेद देवास्तं परा-
दुर्योऽन्यत्रात्मनो देवान्वेद वेदास्तं परादुर्योऽन्यत्रात्मनो
वेदान्वेद भूतानि तं परादुर्योऽन्यत्रात्मनो भूतानि वेद सर्वं
तं परादाद्योऽन्यत्रात्मनः सर्वं वेदेदं ब्रह्मेदं क्षत्रमिमे लोका
इमे देवा इमे वेदा इमानि भूतानीदꣳ सर्वं यदयमात्मा
॥ स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छ-
क्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो
गृहीतः ॥ ८ ॥ स यथा शङ्खस्य ध्मायमानस्य न बाह्या-
ञ्छब्दाञ्छक्नुयाद्ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा
शब्दो गृहीतः ॥ ९ ॥ स यथा वीणायै वाद्यमानायै न
बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय वीणायै तु ग्रहणेन वीणावा-
दस्य वा शब्दो गृहीतः ॥ १० ॥ स यथार्द्रैधाग्नेरभ्या-
हितस्य पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो
भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वा-
ङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्य-
नुव्याख्यानानि व्याख्यानानीष्टꣳ हुतमाशितं पायितमयं
च लोकः परश्च लोकः सर्वाणि च भूतान्यस्यैवैतानि सर्वाणि
निःश्वसितानि ॥ ११ ॥ स यथा सर्वासामपाꣳ समुद्र
एकायनमेवꣳ सर्वेषाꣳ स्पर्शानां त्वगेकायनमेवꣳ सर्वेषां
गन्धानां नासिके एकायनमेवꣳ सर्वेषाꣳ रसानां जिह्वै-

कायनमेवꣳ सर्वेषाꣳ रूपाणां चक्षुरेकायनमेवꣳ स
शब्दानाꣳ श्रोत्रमेकायनमेवꣳ सर्वेषाꣳ संकल्पानां
एकायनमेवꣳ सर्वासां विद्यानाꣳ हृदयमेकायन
सर्वेषां कर्मणाꣳ हस्तावेकायनमेवꣳ सर्वेषामानन्दा
पस्थ एकायनमेवꣳ सर्वेषां विसर्गाणां पायुरेकायन
सर्वेषामध्वनां पादावेकायनमेवꣳ सर्वेषां वेदानां
कायनम् ॥ १२ ॥ स यथा सैन्धवघनोऽनन्तरो
कृत्स्नो रसघन एवैवं वा अरेऽयमात्माऽनन्तरो
कृत्स्नः प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय ता
वानुविनश्यति न प्रेत्य संज्ञास्तीत्यरे ब्रवीमीति हो
याज्ञवल्क्यः ॥ १३ ॥ सा होवाच मैत्रेय्यत्रैव मा
वान्मोहान्तमापीपिपन्न वा अहमिमं विजानामी
होवाच न वा अरेऽहं मोहं ब्रवीम्यविनाशी वा अ
मात्माऽनुच्छित्तिधर्मा ॥ १४ ॥ यत्र हि द्वैतमिव भ
तदितर इतरं पश्यति तदितर इतरं जिघ्रति त
इतरꣳ रसयते तदितर इतरमभिवदति तदितर
शृणोति तदितर इतरं मनुते तदितर इतरꣳ स्
तदितर इतरं विजानाति यत्र त्वस्य सर्वमात्मैवाभूत्त
कं पश्येत्तत्केन कं जिघ्रेत्तत्केन कꣳ रसयेत्तत्केन कम
देत्तत्केन कꣳ शृणुयात्तत्केन कं मन्वीत तत्केन कꣳ
स्पृशेत्तत्केन कं विजानीयाद्येनेदꣳ सर्वं विजानाति तं केन
नीयात्स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यतेऽशी

शीर्यतेऽसङ्गो न हि सज्जतेऽसितो न व्यथते न रिष्य-
विज्ञातारमरे केन विजानीयादित्युक्तानुशासनासि मै-
तावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यो वि-
र ॥ १५ ॥ इति पञ्चमं ब्राह्मणम् ॥ ५ ॥

थ: वंशः पौतिमाष्यात्पौतिमाष्यो गौपवनाद्गौप-
पौतिमाष्यात्पौतिमाष्यो गौपवनाद्गौपवनः कौशि-
शिकः कौण्डिन्यात्कौण्डिन्यः शाण्डिल्याच्छाण्डि-
कौशिकाच्च गौतमाच्च गौतमः ॥ १ ॥ अग्निवेश्या-
वेश्यो गार्ग्याद्गार्ग्यो गार्ग्याद्गार्ग्यो गौतमाद्गौतमः
त्सैतवः पाराशर्यायणात्पाराशर्यायणो गार्ग्यायणा-
यण उद्दालकायनादुद्दालकायनो जाबालायनाज्जा-
यनो माध्यन्दिनायनान्माध्यन्दिनायनः सौकराय-
सौकरायणः काषायणात्काषायणः सायकायनात्साय-
नः कौशिकायनेः कौशिकायनिः ॥ २ ॥ घृतकौशि-
कौशिकः पाराशर्यायणात्पाराशर्यायणः पाराशर्या-
शर्यो जातूकर्ण्याज्जातूकर्ण्य आसुरायणाच्च यास्का-
सुरायणस्त्रैवणेस्त्रैवणिरौपजङ्घनेरौपजङ्घनिरासुरेरासुरि-
द्वाजाद्भारद्वाज आत्रेयादात्रेयो माण्टेर्माण्टिर्गौतमा-
तमो गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छा-
ल्यः कैशोर्यात्काप्यात्कैशोर्यः काप्यः कुमारहारिता-
मारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भी-
ण्डिन्यो वत्सनपातो बाभ्रवाद्वत्सनपाद्बाभ्रवः पथः

सौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य आ
आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्वि
स्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्वणाद्दध्यङ्
दैवादथर्वा दैवो मृत्योः प्राध्वꣳसनान्मृत्युः प्राध्व
प्रध्वꣳसनात्प्रध्वꣳसन एकर्षेरेकर्षिर्विप्रचित्तेर्विप्र
व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः स
त्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयंभुब्रह्मणे
॥ ३ ॥ इति षष्ठं ब्राह्मणम् ॥ ६ ॥ चतुर्थोऽध्यायः

## पञ्चमोऽध्यायः ।

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ॥ पूर्णमादाय पूर्णमेवावशिष्यते ॥ ॐ ३ खं ब्रह्म खं वायुरं खमिति ह स्माह कौरव्यायणीपुत्रो वे ब्राह्मणा विदुर्वेदैनेन यद्वेदितव्यम् ॥ १ ॥ इति ब्राह्मणम् ॥ १ ॥

त्रयाः प्राजापत्याः प्रजापतौ पितरि ब्रह्मच देवा मनुष्या असुरा उषित्वा ब्रह्मचर्यं देवा ब्रवीतु नो भवानिति तेभ्यो हैतदक्षरमुवाच द इति ज्ञासिष्टा ३ इति व्यज्ञासिष्मेति होचुर्दाम्यतेति न त्योमिति होवाच व्यज्ञासिष्टेति ॥ १ ॥ अथ हैनं म ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदेवाक्षरमुवा इति व्यज्ञासिष्टा ३ इति व्यज्ञासिष्मेति होचुर्द

थेत्योमिति होवाच व्यज्ञासिष्टेति ॥ २ ॥ अथ हैनम-
ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदेवाक्षरमुवाच
इति व्यज्ञासिष्टा ३ इति व्यज्ञासिष्मेति होचुर्दयध्व-
ति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति तदेतदे-
दैवी वागनुवदति स्तनयित्नुर्द द द इति दाम्यत
दयध्वमिति तदेतत्त्रयꣳ शिक्षेद्दमं दानं दयामिति
॥ इति द्वितीयं ब्राह्मणम् ॥ २ ॥

ष प्रजापतिर्यद्धृदयमेतद्ब्रह्मैतत्सर्वं तदेतत्त्र्यक्षरꣳ हृद-
ति हृ इत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये च य एवं
द इत्येकमक्षरं ददत्यस्मै स्वाश्चान्ये च य एवं वेद
त्येकमक्षरमेति स्वर्गं लोकं य एवं वेद ॥ १ ॥
तृतीयं ब्राह्मणम् ॥ ३ ॥

द्वै तदेतदेव तदास सत्यमेव स यो हैतं महद्यक्षं
जं वेद सत्यं ब्रह्मेति जयतीमाँल्लोकान् जित इन्व-
सौ य एवमेतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति
ꣳ ह्येव ब्रह्म ॥ १ ॥ इति चतुर्थं ब्राह्मणम् ॥ ४ ॥

आप एवेदमग्र आसुस्ता आपः सत्यमसृजन्त सत्यं
ब्रह्म प्रजापतिं प्रजापतिर्देवाꣳस्ते देवाः सत्यमेवो-
ते तदेतत्त्र्यक्षरꣳ सत्यमिति स इत्येकमक्षरं तीत्येक-
रं यमित्येकमक्षरं प्रथमोत्तमे अक्षरे सत्यं मध्यतोऽनृतं
तदनृतमुभयतः सत्येन परिगृहीतꣳ सत्यभूयमेव भव-
नं विद्वाꣳसमनृतꣳ हिनस्ति ॥१॥ तद्यत्तत्सत्यमसौ स

आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षि-
क्षन्पुरुषस्तावेतावन्योन्यस्मिन्प्रतिष्ठितौ रश्मिभि-
ऽस्मिन्प्रतिष्ठितः प्राणैरयममुष्मिन्स यदोत्क्रमिष्यन्
शुद्धमेवैतन्मण्डलं पश्यति नैनमेते रश्मयः प्रत्या-
॥ २ ॥ य एष एतस्मिन्मण्डले पुरुषस्तस्य भूरिति
एकं शिर एकमेतदक्षरं भुव इति बाहू द्वौ ब-
एते अक्षरे स्वरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे
पनिषदहरिति हन्ति पाप्मानं जहाति च य एवं
॥ ३ ॥ योऽयं दक्षिणेऽक्षन्पुरुषस्तस्य भूरिति शिर
शिर एकमेतदक्षरं भुव इति बाहू द्वौ बाहू द्वे एते
स्वरिति प्रतिष्ठा प्रतिष्ठे द्वे द्वे एते अक्षरे तस्योपनि-
मिति हन्ति पाप्मानं जहाति च य एवं वेद ॥
इति पञ्चमं ब्राह्मणम् ॥ ५ ॥

मनोमयोऽयं पुरुषो भाः सत्यस्तस्मिन्नन्तर्हृदये
व्रीहिर्वा यवो वा स एष सर्वस्येशानः सर्वस्याधि-
सर्वमिदं प्रशास्ति यदिदं किंच ॥ १ ॥ इति षष्ठं
णम् ॥ ६ ॥

विद्युद्ब्रह्मेत्याहुर्विदानाद्विद्युद्विद्यत्येनं पाप्मनो य
वेद विद्युद्ब्रह्मेति विद्युद्ध्येव ब्रह्म ॥ १ ॥ इति
ब्राह्मणम् ॥ ७ ॥

वाचं धेनुमुपासीत तस्याश्चत्वारः स्तनाः स्वाहा-
वषट्कारो हन्तकारः स्वधाकारस्तस्य द्वौ स्तनौ देवा

न्ति स्वाहाकारं च वषट्कारं च हन्तकारं मनुष्याः
कारं पितरस्तस्याः प्राण ऋषभो मनो वत्सः ॥ १ ॥
मं ब्राह्मणम् ॥ ८ ॥

यमग्निर्वैश्वानरो योयमन्तः पुरुषे येनेदमन्नं पच्यते
मद्यते तस्यैष घोषो भवति यमेतत्कर्णावपिधाय
ति स यदोत्क्रमिष्यन्भवति नैनं घोषꣳ शृणोति
॥ इति नवमं ब्राह्मणम् ॥ ९ ॥

दा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै
त्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्व
मते स आदित्यमागच्छति तस्मै स तत्र विजिहीते
लम्बरस्य खं तेन स ऊर्ध्व आक्रमते स चन्द्रमसमा-
ति तस्मै स तत्र विजिहीते यथा दुन्दुभेः खं तेन
र्ध्व आक्रमते स लोकमागच्छत्यशोकमहिमं तस्मि-
ति शाश्वतीः समाः॥१॥इति दशमं ब्राह्मणम्॥१०॥

द्वै परमं तपो यद्व्याहितस्तप्यते परमꣳ हैव लोकं
य एवं वेदैतद्वै परमं तपो यं प्रेतमरण्यꣳ हरन्ति
हैव लोकं जयति य एवं वेदैतद्वै परमं तपो यं
ग्नावभ्यादधति परमꣳ हैव लोकं जयति य एवं
॥ १ ॥ इति एकादशं ब्राह्मणम् ॥ ११ ॥

न्नं ब्रह्मेत्येक आहुस्तन्न तथा पूयति वा अन्नमृते
प्राणो ब्रह्मेत्येक आहुस्तन्न तथा शुष्यति वै प्राण
नादेते ह त्वेव देवते एकधाभूयं भूत्वा परमतां

गच्छतस्तद्ध स्माह प्रातृदः पितरं किꣳस्विदेवैवं
साधु कुर्यां किमेवास्मा असाधु कुर्यामिति स ह
पाणिना मा प्रातृद कस्त्वेनयोरेकधाभूयं भूत्वा प
गच्छतीति तस्मा उ हैतदुवाच वीत्यन्नं वै वि अन्ने
नि सर्वाणि भूतानि विष्टानि रमिति प्राणो वै रं
हीमानि सर्वाणि भूतानि रमन्ते सर्वाणि ह वा
न्भूतानि विशन्ति सर्वाणि भूतानि रमन्ते य एवं
॥ १ ॥ इति द्वादशं ब्राह्मणम् ॥ १२ ॥

उक्थं प्राणो वा उक्थं प्राणो हीदꣳ सर्वमुत्था
द्धास्मादुक्थविद्वीरस्तिष्ठत्युक्थस्य सायुज्यꣳ सलो
जयति य एवं वेद ॥ १ ॥ यजुः प्राणो वै यजुः
हीमानि सर्वाणि भूतानि युज्यन्ते युज्यन्ते हास्मै स
भूतानि श्रैष्ठ्याय यजुषः सायुज्यꣳ सलोकतां जय
एवं वेद ॥ २ ॥ साम प्राणो वै साम प्राणे ह
सर्वाणि भूतानि सम्यञ्चि सम्यञ्चि हास्मै सर्वाणि भू
श्रैष्ठ्याय कल्पन्ते साम्नः सायुज्यꣳ सलोकतां जय
एवं वेद ॥३॥ क्षत्रं प्राणो वै क्षत्रं प्राणो हि वै क्षत्रं
हैनं प्राणः क्षणितोः प्र क्षत्रमत्राप्नोति क्षत्रस्य सा
सलोकतां जयति य एवं वेद ॥ ४ ॥ इति त्र
ब्राह्मणम् ॥ १३ ॥

भूमिरन्तरिक्षं द्यौरित्यष्टावक्षराण्यष्टाक्षरꣳ ह वा
गायत्र्यै पदमेतदु हैवास्या एतत्स यावदेषु त्रिषु लो

वद्ध जयति योऽस्या एतदेवं पदं वेद ॥ १ ॥ ऋचो
यजूꣳषि सामानीत्यष्टावक्षराण्यष्टाक्षरꣳ ह वा एकं गाय-
त्र्यै पदमेतदु हैवास्या एतत्स यावतीयं त्रयी विद्या ता-
वद्ध जयति योऽस्या एतदेवं पदं वेद ॥ २ ॥ प्राणो-
ऽपानो व्यान इत्यष्टावक्षराण्यष्टाक्षरꣳ ह वा एकं
गायत्र्यै पदमेतदु हैवास्या एतत्स यावदिदं प्राणि तावद्ध
जयति योऽस्या एतदेवं पदं वेदाथास्या एतदेव तुरीयं
दर्शतं पदं परोरजा य एष तपति यद्वै चतुर्थं तत्तुरीयं
दर्शतं पदमिति ददृश इव ह्येष परोरजा इति सर्वमु ह्ये-
वैष रज उपर्युपरि तपत्येवꣳ हैव श्रिया यशसा तपति
योऽस्या एतदेवं पदं वेद ॥ ३ ॥ सैषा गायत्र्येतस्मिꣳ-
स्तुरीये दर्शते पदे परोरजसि प्रतिष्ठिता तद्वैतत्सत्ये प्रति-
ष्ठितं चक्षुर्वै सत्यं चक्षुर्हि वै सत्यं तस्माद्यदिदानीं द्वौ वि-
वदमानावेयातामहमदर्शमहमश्रौषमिति य एवं ब्रूयाद-
हमदर्शमिति तस्मा एव श्रद्दध्याम तद्वै तत्सत्यं बले
प्रतिष्ठितं प्राणो वै बलं तत्प्राणे प्रतिष्ठितं तस्मादाहुर्बलꣳ
सत्यादोजीय इत्येवंवेषा गायत्र्यध्यात्मं प्रतिष्ठिता सा
हैषा गयाꣳस्तत्रे प्राणा वै गयास्तत्प्राणाꣳस्तत्रे तद्यद्गयाꣳ-
स्तत्रे तस्माद्गायत्री नाम स यामेवामूꣳ सावित्रीमन्वाहै-
षैव सा स यस्मा अन्वाह तस्य प्राणाꣳस्त्रायते ॥ ४ ॥ ताꣳ
हैतामेके सावित्रीमनुष्टुभमन्वाहुर्वागनुष्टुबेतद्वाचमनुब्रूम
इति न तथा कुर्याद्गायत्रीमेव सावित्रीमनुब्रूयाद्यदिह

वा अप्येवंविद्बह्विव प्रतिगृह्णाति न हैव तद्गायत्र्या
चन पदं प्रति ॥ ५ ॥ स य इमाꣳस्त्रींल्लोकान्पू
तिगृह्णीयात्सोऽस्या एतत्प्रथमं पदमाप्नुयादथ या
त्रयी विद्या यस्तावत्प्रतिगृह्णीयात्सोऽस्या एतद्द्वितीं
माप्नुयादथ यावदिदं प्राणि यस्तावत्प्रतिगृह्णीयात्
एतत्तृतीयं पदमाप्नुयादथास्या एतदेव तुरीयं दर्श
परोरजा य एष तपति नैव केनचनाप्यं कुत उ एता
तिगृह्णीयात् ॥ ६ ॥ तस्या उपस्थानं गायत्र्यसि
द्विपदी त्रिपदी चतुष्पद्यपदसि नहि पद्यसे नमस्ते
याय दर्शताय पदाय परोरजसेऽसावदो मा प्रा
यं द्विष्यादसावस्मै कामो मा समृद्धीति वा न
स कामः समृध्यते यस्मा एवमुपतिष्ठतेऽहमदः प्रा
वा ॥७॥ एतद्ध वै तज्जनको वैदेहो बुडिलमाश्वत
वाच यन्नु हो तद्गायत्रीविद्ब्रूथा अथ कथꣳ हस्तीभू
सीति मुखꣳ ह्यस्याः सम्राण्न विदांचकारेति होवा
अग्निरेव मुखं यदिह वा अपि बह्विवाग्नावभ्या
सर्वमेव तत्संदहत्येवꣳ हैवैवंविद्यद्यपि बह्विव पा
रुते सर्वमेव तत्संप्साय शुद्धः पूतोऽजरोऽमृतः सं
॥ ८ ॥ इति पञ्चमस्य चतुर्दशं ब्राह्मणम् ॥ १४ ॥

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखं । तत्त्वं
पावृणु सत्यधर्माय दृष्टये । पूषन्नेकर्षे यमसूर्य प्रा
व्यूहरश्मीन्समूह तेजो यत्ते रूपं कल्याणतमं

यासि योऽसावसौ पुरुषः सोऽहमस्मि । वायुरनिलममृतमथेदं भस्मान्तꣳ शरीरम् । ॐ ३ क्रतो स्मर कृतꣳ स्मर क्रतो स्मर कृतꣳ स्मर । अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥ १ ॥ इति पञ्चदशं ब्राह्मणम् ॥ १५ ॥ इति पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः ॥ ६ ॥

ॐ ॥ यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति प्राणो वै ज्येष्ठश्च श्रेष्ठश्च ज्येष्ठश्च श्रेष्ठश्च स्वानां भवत्यपि च येषां बुभूषति य एवं वेद ॥ १ ॥ यो ह वै वसिष्ठां वेद वसिष्ठः स्वानां भवति वाग्वै वसिष्ठा वसिष्ठः स्वानां भवत्यपि च येषां बुभूषति य एवं वेद ॥ २ ॥ यो ह वै प्रतिष्ठां वेद प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे चक्षुर्वै प्रतिष्ठा चक्षुषा हि समे च दुर्गे च प्रतितिष्ठति प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे य एवं वेद ॥ ३ ॥ यो ह वै संपदं वेद सꣳहास्मै पद्यते यं कामं कामयते श्रोत्रं वै संपच्छ्रोत्रे हीमे सर्वे वेदा अभिसंपन्नाः सꣳहास्मै पद्यते यं कामं कामयते य एवं वेद ॥ ४॥ यो ह वा आयतनं वेदायतनꣳ स्वानां भवत्यायतनं जनानां मनो वा आयतनमायतनꣳ स्वानां भवत्यायतनं जनानां य एवं वेद ॥ ५ ॥ यो ह वै प्रजापतिं वेद प्रजायते ह प्रजया पशुभी रेतो वै प्रजापतिः प्रजा-

यते ह प्रजया पशुभिर्य एवं वेद ॥ ६ ॥ ते हेमे
अहꣳश्रेयसे विवदमाना ब्रह्म जग्मुस्तद्धोचुः को नो
इति तद्धोवाच यस्मिन्व उत्क्रान्त इदꣳ शरीरं पा
मन्यते स वो वसिष्ठ इति ॥ ७ ॥ वाग्घोच्चक्राम
संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितु
ते होचुर्यथाकला अवदन्तो वाचा प्राणन्तः प्राणेन
न्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वाꣳसो मनसा प्र
माना रेतसैवमजीविष्मेति प्रविवेश ह वाक् ॥ ८ ॥
होच्चक्राम तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत
जीवितुमिति ते होचुर्यथा अन्धा अपश्यन्तश्चक्षुषा
न्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण विद्वा
मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह
॥ ९ ॥ श्रोत्रꣳ होच्चक्राम तत्संवत्सरं प्रोष्यागत्यो
कथमशकत मदृते जीवितुमिति ते होचुर्यथा ब
अशृण्वन्तः श्रोत्रेण प्राणन्तः प्राणेन वदन्तो वाचा
न्तश्चक्षुषा विद्वाꣳसो मनसा प्रजायमाना रेतसैव
विष्मेति प्रविवेश ह श्रोत्रम् ॥ १० ॥ मनो होच्च
तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जी
मिति ते होचुर्यथा मुग्धा अविद्वाꣳसो मनसा प्रा
प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रो
प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह मनः ॥
रेतो होच्चक्राम तत्संवत्सरं प्रोष्यागत्योवाच कथम

ते जीवितुमिति ते होचुर्यथा क्लीबा अप्रजायमाना रेतसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वाꣳसो मनसैवमजीविष्मेति प्रविवेश ह रेतः ॥ १२ ॥ अथ ह प्राण उत्क्रमिष्यन्यथा महासुहयः सैन्धवः पड्वीशशङ्कून्संवृहेदेवꣳ हैवेमान्प्राणान्संववर्ह ते होचुर्मा भगव उत्क्रमीर्न वै शक्ष्यामस्त्वदृते जीवितुमिति तस्यो मे बलिं कुरुतेति तथेति ॥१३॥ सा ह वागुवाच यद्वा अहं वसिष्ठास्मि त्वं तद्वसिष्ठोऽसीति यद्वा अहं प्रतिष्ठास्मि त्वं तत्प्रतिष्ठोऽसीति चक्षुर्यद्वा अहꣳ संपदस्मि त्वं तत्संपदसीति श्रोत्रं यद्वा अहमायतनमस्मि त्वं तदायतनमसीति मनो यद्वा अहं प्रजातिरस्मि त्वं तत्प्रजातिरसीति रेतस्तस्यो मे किमन्नं किं वास इति यदिदं किंचाश्वभ्य आकृमिभ्य आकीटपतङ्गेभ्यस्तत्तेऽन्नमापो वास इति न ह वा अस्यानन्नं जग्धं भवति नान्नं प्रतिगृहीतं य एवमेतदनस्यान्नं वेद तद्विद्वाꣳसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वाचामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते ॥ १४ ॥ इति षष्ठे प्रथमं ब्राह्मणम् ॥१॥

श्वेतकेतुर्ह वा आरुणेयः पञ्चालानां परिषदमाजगाम स आजगाम जैबलिं प्रवाहणं परिचारयमाणं तमुदीक्ष्याभ्युवाद कुमार ३ इति स भो ३ इति प्रतिशुश्रावानुशिष्टोऽन्वसि पित्रेत्योमिति होवाच ॥ १ ॥ वेत्थ यथेमाः प्रजाः प्रयत्यो विप्रतिपद्यन्ता ३ इति नेति होवाच वेत्थो

यथेमं लोकं पुनरापद्यन्ता ३ इति नेति हैवोवाच
यथासौ लोक एवं बहुभिः पुनः पुनः प्रयद्भिर्न संपूर्य
इति नेति हैवोवाच वेत्थो यतिथ्यामाहुत्याꣳ
यामापः पुरुषवाचो भूत्वा समुत्थाय वदन्ती ३
नेति हैवोवाच वेत्थो देवयानस्य वा पथः प्रतिपदं
याणस्य वा यत्कृत्वा देवयानं वा पन्थानं प्रतिप
पितृयाणं वापि हि न ऋषेर्वचः श्रुतं । द्वे सृती अ
पितॄणामहं देवानामुत मर्त्यानां । ताभ्यामिदं विश्वं
त्समेति यदन्तरा पितरं मातरं चेति नाहमत एक
वेदेति होवाच ॥ २ ॥ अथैनं वसत्योपमन्त्रयांचक्रेऽना
वसतिं कुमारः प्रदुद्राव स आजगाम पितरं तꣳ हो
चेति वाव किल नो भवान्पुरानुशिष्टानवोचदिति
सुमेध इति पञ्च मा प्रश्नान् राजन्यबन्धुरप्राक्षीत्
नैकंचन वेदेति कतमे त इतीम इति ह प्रतीकान्
जहार ॥ ३ ॥ स होवाच तथा नस्त्वं तात जानी
यथा यदहं किंच वेद सर्वमहं तत्तुभ्यमवोचं प्रेहि
तत्र प्रतीत्य ब्रह्मचर्यं वत्स्याव इति भवानेव गच्छति
स आजगाम गौतमो यत्र प्रवाहणस्य जैवलेरास त
आसनमाहृत्योदकमाहारयांचकाराथ हास्मा अर्घ्यं च
तꣳ होवाच वरं भगवते गौतमाय दद्म इति ॥ ४ ॥
होवाच प्रतिज्ञातो म एष वरो यां तु कुमारस्यान्ते
चमभाषथास्तां मे ब्रूहीति ॥ ५ ॥ स होवाच दैवेषु

गौतम तद्वरेषु मानुषाणां ब्रूहीति ॥ ६ ॥ स होवाच विज्ञायते हास्ति हिरण्यस्योपात्तं गोअश्वानां दासीनां प्रवाराणां परिधानस्य मा नो भवान्बहोरनन्तस्यापर्यन्तस्याभ्यवदान्योऽभूदिति स वै गौतम तीर्थेनेच्छासा इत्युपैम्यहं भवन्तमिति वाचाह स्मैव पूर्व उपयन्ति स होपायनकीर्त्योवास ॥ ७ ॥ स होवाच यथा नस्त्वं गौतम मापराधास्तव च पितामहा यथेयं विद्येतः पूर्वं न कस्मिᳪश्चन ब्राह्मण उवास तां त्वहं तुभ्यं वक्ष्यामि को हि त्वैवं ब्रुवन्तमर्हति प्रत्याख्यातुमिति ॥ ८ ॥ असौ वै लोकोऽग्निर्गौतम तस्यादित्य एव समिद्रश्मयो धूमोऽहरर्चिर्दिशोऽङ्गारा अवान्तरदिशो विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुत्यै सोमो राजा संभवति ॥९॥ पर्जन्यो वाऽग्निर्गौतम तस्य संवत्सर एव समिदभ्राणि धूमो विद्युदर्चिरशनिरङ्गारा ह्रादुनयो विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः सोमᳪ राजानं जुह्वति तस्या आहुत्यै वृष्टिः संभवति ॥१०॥ अयं वै लोकोऽग्निर्गौतम तस्य पृथिव्येव समिदग्निर्धूमो रात्रिरर्चिश्चन्द्रमा अङ्गारा नक्षत्राणि विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा वृष्टिं जुह्वति तस्या आहुत्या अन्नᳪ संभवति ॥ ११ ॥ पुरुषो वाऽग्निर्गौतम तस्य व्यात्तमेव समित्प्राणो धूमो वागर्चिश्चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुत्यै रेतः संभवति ॥ १२ ॥ योषा

वा अग्निर्गौतम तस्य उपस्थ एव समिल्लोमानि धूमो
निरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विस्फुलि
स्तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुत्यै पु
संभवति स जीवति यावज्जीवत्यथ यदा म्रियते ॥ १
अथैनमग्नये हरन्ति तस्याग्निरेवाग्निर्भवति समित्
द्धूमो धूमोऽर्चिरर्चिरङ्गारा अङ्गारा विस्फुलिङ्गा विस्फु
ङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः पुरुषं जुह्वति तस्या आ
पुरुषो भास्वरवर्णः संभवति ॥ १४ ॥ ते य एवमेतद्वि
र्ये चामी अरण्ये श्रद्धाꣳ सत्यमुपासते तेऽर्चिरभिसं
न्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्या
ण्मासानुदङ्ङादित्य एति मासेभ्यो देवलोकं देवलो
दादित्यमादित्याद्वैद्युतं तान्वैद्युतान्पुरुषो मानस
ब्रह्मलोकान् गमयति तेषु ब्रह्मलोकेषु पराः परावतो
न्ति तेषां न पुनरावृत्तिः ॥ १५ ॥ अथ ये यज्ञेन दा
तपसा लोकाञ्जयन्ति ते धूममभिसंभवन्ति धूमाद्रा
रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्यान्षण्मासान्
क्षिणादित्य एति मासेभ्यः पितृलोकं पितृलोकाच्चन्द्र
चन्द्रं प्राप्यान्नं भवन्ति ताꣳस्तत्र देवा यथा सो
राजानमाप्यायस्वापक्षीयस्वेत्येवमेनाꣳस्तत्र भक्षयन्ति
षां यदा तत्पर्यवैत्यथेममेवाकाशमभिनिष्पद्यन्त आ
शाद्वायुं वायोर्वृष्टिं वृष्टेः पृथिवीं ते पृथिवीं प्राप्य
भवन्ति ते पुनः पुरुषाग्नौ हूयन्ते ततो योषाग्नौ जाय

कान्प्रत्युत्थायिनस्त एवमेवानुपरिवर्तन्तेऽथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकम् ॥ १६ ॥ इति षष्ठे द्वितीयं ब्राह्मणम् ॥ २ ॥

स यः कामयेत महत्प्राप्नुयामित्युदगयन आपूर्यमाणपक्षस्य पुण्याहे द्वादशाहमुपसद्व्रती भूत्वौदुम्बरे कꣳसे चमसे वा सर्वौषधं फलानीति संभृत्य परिसमुह्य परिलिप्याग्निमुपसमाधाय परिस्तीर्यावृताज्यꣳ सꣳस्कृत्य पुꣳसा नक्षत्रेण मन्थꣳ संनीय जुहोति—यावन्तो देवास्त्वयि जातवेदस्तिर्यञ्चो घ्नन्ति पुरुषस्य कामान्। तेभ्योऽहं भागधेयं जुहोमि ते मा तृप्ताः सर्वैः कामैस्तर्पयन्तु स्वाहा। या तिरश्ची निपद्यतेऽहं विधरणी इति। तां त्वा घृतस्य धारया यजे सꣳराधनीमहꣳ स्वाहा ॥ १ ॥ ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति प्राणाय स्वाहा वसिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति वाचे स्वाहा प्रतिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति चक्षुषे स्वाहा संपदे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति श्रोत्राय स्वाहाऽऽयतनाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति मनसे स्वाहा प्रजात्यै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति रेतसे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥ २ ॥ अग्नये स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति सोमाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भूः स्वाहेत्यग्नौ हुत्वा

मन्थे सꣳस्रवमवनयति भुवः स्वाहेत्यग्नौ हुत्वा
सꣳस्रवमवनयति स्वः स्वाहेत्यग्नौ हुत्वा मन्थे स
मवनयति भूर्भुवःस्वः स्वाहेत्यग्नौ हुत्वा मन्थे स
मवनयति ब्रह्मणे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवम
यति क्षत्राय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवन
भूताय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति
ष्यते स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति वि
स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति सर्वाय स
त्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति प्रजापतये स
त्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥ ३ ॥ अथैनम
मृशति भ्रमदसि ज्वलदसि पूर्णमसि प्रस्तब्धमस्येक
मसि हिंकृतमसि हिंक्रियमाणमस्युद्गीथमसि उद्गी
नमसि श्रावितमसि प्रत्याश्रावितमस्यार्द्रे संदीप्त
विभूरसि प्रभूरस्यन्नमसि ज्योतिरसि निधनमसि
र्गोऽसीति ॥४ ॥ अथैनमुद्यच्छत्यामꣳस्यामꣳ हि ते
स हि राजेशानोऽधिपतिः स माꣳ राजेशानोऽधि
करोत्विति ॥ ५ ॥ अथैनमाचामति तत्सवितुर्वरेण्यं
वाता ऋतायते मधु क्षरन्ति सिन्धवः माध्वीर्नः सन्
षधीर्भूः स्वाहा भर्गो देवस्य धीमहि मधु नक्तमुतो
मधुमत्पार्थिवꣳ रजः मधु द्यौरस्तु नः पिता भुवः स्
धियो यो नः प्रचोदयान्मधुमान्नो वनस्पतिर्मधुमाँ ३
सूर्यः माध्वीर्गावो भवन्तु नः स्वः स्वाहेति सर्वां च

वित्स्वयम् ॥ ६४ ॥ अधीत्य चतुरो वेदान्सर्वशास्त्राण्यनेकशः । ब्रह्मतत्त्वं न जानाति दर्वी पाकरसं यथा ॥ ६५ ॥ स्वदेहाशुचिगन्धेन न विरज्येत यः पुमान् । विरागकारणं तस्य किमन्यदुपदिश्यते ॥ ६६ ॥ अत्यन्तमलिनो देहो देही चात्यन्तनिर्मलः । उभयोरन्तरं ज्ञात्वा कस्य शौचं विधीयते ॥ ६७ ॥ बन्धो हि वासनाबन्धो मोक्षः स्याद्वासनाक्षयः । वासनां संपरित्यज्य मोक्षार्थित्वमपि त्यज ॥ ६८ ॥ मानसीर्वासनाः पूर्वं त्यक्त्वा विषयवासनाः । मैत्र्यादिवासनानाम्नीर्गृहाणामलवासनाः ॥ ६९ ॥ ता अप्यतः परित्यज्य ताभिर्व्यवहरन्नपि । अन्तःशान्तः समस्नेहो भव चिन्मात्रवासनः ॥ ७० ॥ तामप्यथ परित्यज्य मनोबुद्धिसमन्विताम् । शेषस्थिरसमाधानो मयि त्वं भव मारुते ॥ ७१ ॥ अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् । अनामगोत्रं मम रूपमीदृशं भजस्व नित्यं पवनात्मजार्तिहम् ॥ ७२ ॥ दृशिस्वरूपं गगनोपमं परं सकृद्विभातं त्वजमेकमक्षरम् । अलेपकं सर्वगतं यदद्वयं तदेव चाहं सकलं विमुक्तॐ ॥ ७३ ॥ दृशिस्तु शुद्धोऽहमविक्रियात्मको न मेऽस्ति कश्चिद्विषयः स्वभावतः । पुरस्तिरश्चोर्ध्वमधश्च सर्वतः सुपूर्णभूमाहमितीह भावय ॥ ७४ ॥ अजोऽमरश्चैव तथाजरोऽमृतः स्वयंप्रभः सर्वगतोऽहमव्ययः । न कारणं कार्यमतीत्य निर्मलः सदैव तृप्तोऽहमि-

तीह भावय ॥७५॥ जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते । विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव ॥ ७६॥ तदेतदृचाभ्युक्तम् । तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् । तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥ ॐ सत्यमित्युपनिषत् ॥ ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ ॐशान्तिः शान्तिः शान्तिः ॥ हरिः ॐ तत्सत् ॥

इति शुक्लयजुर्वेदगता मुक्तिकोपनिषत्समाप्ता ॥

## संपूर्णा अष्टाविंशत्युपनिषदः ।

# विक्रेयाणि संस्कृतपुस्तकानि ।

## अष्टोत्तरशतोपनिषदः ।

मू० २॥ रु., मा. ४ आ.

## तत्त्वप्रदीपिका—चित्सुखी ।

श्रीमच्चित्सुखाचार्यमुनिविरचिता । परमहंस-प्रत्यग्रूपभगवत्प्रणीतया नयनप्रसादिनीसमाख्यया व्याख्यया सहिता ।

मूल्यं ३ रु., मा. ६ आ.

## ब्रह्मसूत्रशाङ्करभाष्यम् ।

श्रीमदप्पयदीक्षितविरचितपरिमलोपबृंहितश्रीमदमलानन्दसरस्वतीप्रणीतकल्पतरुव्याख्यायुतश्रीमद्वाचस्पतिमिश्रकृतभामतीव्याख्याविलसितम् ।

मू० १० रु०, मा० १ रु०.

# ब्रह्मसूत्रशाङ्करभाष्यम् ।

## चतुःसूत्रीभागः ।

मूल्यं १॥ रु०, मा० ३ आ.

# ब्रह्मसूत्रशांकरभाष्यम् ।

## मूलमात्रं, सटिप्पणम् ।

मूल्यं २ रु०, मार्ग. ४ आ.

# योगवासिष्ठः ।

## वासिष्ठमहारामायणतात्पर्यप्रकाशव्याख्या-सहितः ।

मू. १० रु. मा. १ रु.

# लघुयोगवासिष्ठः ।

## आत्मसुखकृतया वासिष्ठचन्द्रिकाटीकया सहितः ।

मू. ५ रु. मा. ८ आ.

# भगवद्गीता ।

शांकरानन्दीव्याख्यासहिता ।

मूल्यं २ रु०, मार्ग. ४ आ.

# श्रीमद्भगवद्गीता ।

( व्याख्याष्टक ८ मण्डिता । )

१ शांकरभाष्यं २ आनन्दगिरिव्याख्या ३ नीलकण्ठी ४ मधुसूदनी ५ भाष्योत्कर्षदीपिका ६ श्रीधरी ७ अभिनवगुप्तपादाचार्यव्याख्या ८ मधुसूदनीव्याख्या गूढार्थतत्त्वालोकविवरणं च ।

मू० ८ रु. ट० १ रु.

# ललितासहस्रनाम ।

भास्कररायप्रणीतसौभाग्यभास्कराख्यभाष्योपेतम् ।

मू० १॥ रु. मार्ग. ४ आ.

# अद्वैतसिद्धिः ।

श्रीमत्परमहंसमधुसूदनसरस्वती-
स्वामिप्रणीता ।

विट्ठलेशीयव्याख्योपबृंहित-गौडब्रह्मानन्दी-
व्याख्यासनाथीकृता बलभद्रप्रणीतसि-
द्धिव्याख्यया-अनन्तकृष्णशास्त्रि-
संगृहीतन्यायामृताऽद्वैतसिद्धि-
तरङ्गिणीलघुचन्द्रिका-
संग्रहश्च ।

(मिथ्यात्वमिथ्यात्वान्तो भागः ।)

मू. २॥ रु., मा. ४ आ.

निर्णयसागरयन्त्रालयाधिपतिः

पांडुरङ्ग जावजी,

कालिकादेवीरोड-मुंबई.

